(115) [3]अथोत्तरपाद: ।

[4]तत्र निर्दोषायां भाषायां सत्यां ज्ञाततदर्थेन उत्तरं देयं । [5]तदाह बृहस्पति: -

116 विनिश्चिते पूर्वपक्षे ग्राह्याग्राह्यविशोधिते ।
प्रतिज्ञार्थे स्थिरीकृते लेखयेदुत्तरं तत: ॥ [B 3.2]

[1]विनिश्चिते स्वरूपतो ऽवधारिते ।

[2]याज्ञवल्क्य: -

117 श्रुतार्थस्योत्तरं लेख्यं पूर्वावेदकसंनिधौ ।
ततो ऽर्थी लेखयेत् सद्य: प्रतिज्ञातार्थसाधकं ॥[Y 2.7]

118 तत्सिद्धौ सिद्धिमाप्नोति विपरीतमतो ऽन्यथा ॥ [Y 2.8ab]

[1]यो ऽर्थ: परिशोधितत्वादि: तस्य साधनं साक्ष्यादि । [2] तस्य सिद्धौ उपन्यस्तस्य प्रमाणस्य सिद्धौ निर्वाहिणे । [3] सिद्धिं विजयं । [4] अन्यथा ऽनिर्वाहिणे । [5] विपरीतं अविजयं । [6] मङ्गमिति तु मिताक्षरा । [7] श्रुतार्थस्य भाषावचनस्य । [8] पूर्वावेदको भाषिता । [9] अर्थी प्रतिवादी । [10] प्रतिज्ञात: प्रत्यर्थिप्रतिज्ञात: । [11] सद्य: उत्तरलिखनानन्तरं ।

[12]कात्यायन: -

119 श्रुत्वा लेखयतो ह्यर्थं प्रत्यर्थी कारणाद्यदि ।
कालं विवादे याचेत तस्य देयो न संशय: ॥ [K 145]

120 सद्यो वैकाहपंचाहौ त्र्यहं वा गुरुलाघवात् ।
लभेतासौ त्रिपक्षं वा सप्ताहं वा ऋणादिषु ॥[K 146]

[1] अत्र व्यवस्थामाह स एव -

121 सद्य: कृते सद्यो वाद: समातीते दिनं क्षिपेत् ।
षडाब्दिके त्रिरात्रं तु सप्ताहं द्वादशाब्दिके ॥ [K 154]

122 विंशत्यब्दे दशाहं तु मासार्धं वा लभेत स: ।
मासं त्रिंशत्समातीते त्रिपक्षं परतो लभेत् ॥ [ 155]

123 कालं शक्तिं विदित्वा तु कार्याणां च बलाबलं ।
अल्पं वा बहुकालं वा दद्यात्प्रत्यर्थिने प्रभु: ॥[K 147]

[1] प्रभुरिह विचारक: ।

---

115[4] ०र्थेन उत्तरं : B1B2 र्थेनोत्तरं । 118[2] प्रमाणस्य : LCM2 प्रमाण ।

[2]बृहस्पतिः -

124 एकाहत्र्यहपंचाहसप्ताहं पक्षमेव वा ।
मासं ऋतुत्रयं वापि लभते शक्त्यपेक्षया ॥[B 3.4]

[1]सद्योविषयं कियन्तमप्याह याज्ञवल्क्यः -

125 साहसस्तेयपारुष्यगोऽभिशापात्यये स्त्रियां ।
विवादयेत् सद्य एव कालोऽन्यत्रेच्छया स्मृतः ॥[Y 2.12]

[1]गौरत्र दोग्ध्री । [2] गोत्वमुपलक्षणं - [3]यत्र कालात्ययेन भोगादिक्षति-स्तत्परं । [4] अत्यये मरणे सम्भाव्यमाने । [5]स्त्रियां कुलस्त्रियां चारित्र्य-विवादे दास्यां वा स्वत्वविवादे ।

[6]इदं च सप्तग्रहणमुपलक्षणं - [7]यत्र कालातिपाते प्रतिकूलं तत्परं । [8] त-दाह कात्यायनः -

126 व्यपैति गौरवं यत्र विनाशस्त्याग एव वा ।
कालं तत्र न कुर्यात्तु कार्यमात्ययिकं हि तत् ॥ [K 139]

[1] अन्यत्र ऋणादौ । [2] तदाह नारदः -

127 गहनत्वाद्विवादानामसामर्थ्यात्स्मृतेरपि ।
ऋणादिषु हरेत्कालं कामं तत्त्वबुभुत्सया ॥[NMā 1.44]

[1]याज्ञवल्कीयमपीच्छापदं तत्त्वबुभुत्सापरमेव ।
[2]हरेत् हारयेत् । [3] विचारक इति शेषः ।

[4]व्यासः -

128 राजदैवकृतो दोषस्तस्मिन् काले यदा भवेत् ।
अवधित्यागमात्रेण न भवेत्स पराजितः ॥ [Vy ?]

129 राजदैवकृतं दोषं साक्षिभिः प्रतिपादयेत् ।
जैह्म्येन वर्तमानस्तु दण्ड्यो दाप्यश्च तद्धनं ॥ [Vy ?]

[1]अवध्यतिक्रमहेतौ राजदैवकस्य प्रमितौ न तदतिक्रामकोऽपराध्यति ।
[2]जैह्म्यात्तु तदतिक्रामन् दण्ड्यश्च भङ्गी च भवतीत्यर्थः ।

[3]कात्यायनः -

130 अभियुक्तोऽभियोक्तारं नाभियुंजीत कर्हिचित् ।
अन्यत्र दण्डपारुष्यस्तेयसंग्रहणात्ययात् ॥ [K 163]

[1]दण्डादिषु पंचस्वपि ममाप्यनेन दण्डपारुष्यादिकं कृतमित्यभियोगो

---

127 °वादानामसाम° : B3 वादस्य असाम । 129[2] दण्ड्यश्च : B1 दण्ड्यः LCM2 दण्ड्यो ।

दातव्य एव, [2]तथैवाभियोगनिस्तारात् ।

[3] याज्ञवल्क्यः –

131 अभियोगमनिस्तीर्य नैनं प्रत्यभियोजयेत् ।
अभियुक्तं न चान्येन नोक्तं विप्रकृतिं नयेत् ॥[Y 2.9]

132 कुर्यात्प्रत्यभियोगं च कलहे साहसेषु च ॥[Y 2.10ab]

[1]अन्येनाभियुक्तं नाभियुंजीत । [2] विप्रकृतिमिति आवेदनकाले ऽन्यथा लेखयित्वा भाषाकाले नान्यथा लेखयेदित्यर्थिषूपदेशद्वयं ।

[3]नारदः –

133 पक्षस्य व्यापकं सारमसंदिग्धमनाकुलं ।
अव्याख्यागम्यमित्येतदुत्तरं तद्विदो विदुः ॥ [NQ 3.2]

[1]पक्षस्य भाषितहेतोर्व्यापकमाच्छादकं । [2] तदुक्तं –

134 पूर्वपक्षार्थसम्बन्धं प्रतिपक्षं निवेशयेदिति ।[NMā 2.2cd = K 159cd]

[1]सारं प्रकृताभियोगि ।[2] असंदिग्धं उच्यमानं सत् निश्चीयमानं। [3] अनाकुलं पूर्वापरविरोधरहितं । [4] अव्याख्यागम्यं अध्याहारादिकं विनैव प्रतीतं । [5]यद्यपि सम्प्रतिपत्तिरज्ञानादिकं च उत्तरं न भाषितहेत्वाच्छादकं तथापि तदभिसंधिना प्रयुक्तमेवेति द्रष्टव्यं । [6]अत एव उत्तीर्यते निस्तीर्यते प्रकृताभियोगो ऽनेनेत्युत्तरमिति प्राचः । [7] नव्यास्तु – [8]पक्षस्य स्वप्रतिज्ञातस्याधार्यमाणत्वादेर्व्यापकं साधकमित्याहुः । [9]पक्षस्य धार्यमाणत्वे साध्ये पक्षीकृतस्य शतस्य व्यापकमभिव्यापकं । [10] तथा चाधमत्रागृहीतमर्धं च परिशोधितमित्यपि मिथ्याकारणघटितमुत्तरं पक्षाभिव्यापकत्वात् संगृहत एवेत्यन्ये ।

[11]अत्र चैतादृशार्थकं वचनमुत्तरं ।

[12]तदेवार्थचातुर्विध्येन विभजते कात्यायनः –

135 सत्यं मिथ्योत्तरं चैव प्रत्यवस्कन्दनं तथा ।
पूर्वन्यायविधिश्चैव उत्तरं स्याच्चतुर्विधं ॥[K 165]

[1]व्यासः –

136 साध्यस्य सत्यवचनं प्रतिपत्तिरुदाहृता ।
कारणं स्यादवस्कन्दो मिथ्या स्यात् साध्यनिह्नुतिः ॥[Vy 1.24]

---

132 कलहे : B3 संग्रहे । 133 °त्येतद् : M1 त्येतत् । 134 °सम्बन्धं : B1B2 B3 सम्बद्धं । 134[6] निस्तीर्यते : B1LCM2om । 134[10] चार्ध° : B2B3अर्धे ।

[1]साध्यस्य भाषितस्य सहेतुसाध्यस्य कण्ठतोऽर्थतो वा निह्नवो मिथ्योत्तरं । [2]केवलसाध्यनिह्नवस्तु सम्प्रतिपत्तिभिन्नेषु त्रिष्वप्युत्तरेषु समान इति द्रष्टव्यं ।

[3]बृहस्पतिः -

137 मिथ्यायां च चतुष्पादः प्रत्यवस्कन्दने तथा ।
प्राङ्न्याये च स विज्ञेयो द्विपात्सम्प्रतिपत्तिषु ॥[B 2.3]

[1] अथ सम्प्रतिपत्तिः ।

138 अनुक्त्वा कारणं यत्र पक्षं वादी प्रपद्यते ।
प्रतिपत्तिस्तु सा ज्ञेया कारणे दूषणं पृथक् ॥[B 3.14]

[1]कारणं परहेतुदूषणकारणं । [2]वादी प्रत्यर्थी । [3]कारणे कारणोत्तरे पृथक् दूषणं भवेदित्यर्थः ।

[4]सम्प्रतिपत्तिश्च सिद्धसाधनमापादयन्ती सदुत्तरं । [5]न चैवं भाषितुर्निग्रहः, [6]विचारस्यास्य तत्त्वनिर्णयार्थकत्वात् । [7]तत्र च सिद्धसाधनस्यादोषत्वादिति ।

[8]अत्र च न क्रियापादो नापि जयपराजयावधारणलक्षणप्रत्याकलितपाद इति द्विपादेव व्यवहारस्[9]तत्सूक्तं - [10]द्विपात् सम्प्रतिपत्तिष्विति ।

[11] अथ मिथ्योत्तरं ।

[12]तत्र कात्यायनः -

139 अभियुक्तोऽभियोगस्य यदि कुर्यादपह्नवं ।
मिथ्या तत्तु विजानीयादुत्तरं व्यवहारतः ॥ [K 167]

[1]अभियोगो हेतुर्गृहीतत्वादिः । [2]तेन हेत्वपलाप एव मिथ्योत्तरमिति सारं ।

[3]व्यासः -

---

136[1] सहेतु° : B1B2 सहेतुक । 136[2] °भिन्नेषु : B1 भिन्नेष्वेव । 138[3] पृथक् : B3 पृथग् । 138[4] °पत्तिश्च : B3 पत्तिः । 138[5] भाषितु°: B3 भाषितहेतु । 138[6] तत्त्व° : B1 om. 138[7] °दोषत्वादिति : B3 दोषत्वात् । 138[9] तत्सूक्तं : B2L तदुक्तं । 139[1] अभियोगो : B1 अभियोगो अभियोग ।

140 मिथ्यैतन्नाभिजानामि मम तत्र न संनिधिः ।
अजातश्चास्मि तत्काल इति मिथ्या चतुर्विधा ॥ [Vy 1.28]

[1] अत्र मिथ्यैतदिति कण्ठतो, न जानामीत्यादिकं त्रिकमर्थतो ऽपह्नवः ।
[2] तदाह कात्यायनो ऽपि -

141 श्रुत्वा भाषार्थमन्यस्तु यदि तं प्रतिषेधति ।
अर्थतः शब्दतो वापि मिथ्या तज्ज्ञेयमुत्तरं ॥ [K 166]

[1] भाषार्थं सहेतुसाध्यं । [2] अत्र च साध्यापह्नवोक्तिरुत्तरान्तरव्यवच्छेद-द्वारा मिथ्योत्तरलक्षणोपयुक्ता । [3] हेत्वपह्नव एव तु स्वरूपासिद्धिर्नाम स्थापनादोष इति विवेक्तव्यं ।

[4] तत्र गृहीतत्वात् त्वं धारयसीति भाषायां मया न गृहीतमिति शब्द-तः । [5] कालविशेषगर्भायां तस्यां तदा नाहं जात इत्यर्थतः । [6] देशकाल-विशेषगर्भायां तस्यां तदा तत्र नाहमासमित्यर्थतः । [7] देशादिमत्त्यां त-च्छून्यायां वा तस्यां न जानामीत्यर्थत एव, [8]योग्यास्मरणेनार्थतस्तद-ग्रहणप्रतिपादनात् । [9] अत्र च चरमत्रयं ग्रहणास्कन्दमुखेन ग्रहणाभावप्रति-पादकं सापदेशमिथ्योत्तरमित्युच्यते । [10] आद्यं मिथ्योत्तरमात्रं । [11] न जानामीति तु सापदेशमिथ्योत्तरमभिमामात्रात् । [12] शेषं तु द्वयं व्या-प्ततया सम्यक् ।

[13] न चैवं समीचोर्ग्रहणास्कन्दकयोरसंनिधानाजन्मनोरेव प्रतिपाद्यता स्या-दिति वाच्यं । [14] तस्याभावरूपतया ग्रहणापेक्षया प्रतिपादनगौरवात् । [15] ताभ्यां चाग्रहणस्य व्यापकानुपलब्ध्या प्रत्यायने ऽपि गौरवात् । [16] तत्प्रत्यायनाशक्तावपि संशयतादवस्थ्याच्च । [17] न हि तदा जातस्तत्र सन् गृह्णात्येवेति नियमः । [18] धर्मव्यवहारे च च्छलमवश्यनिरस्यं । [19] तस्माच्चतुर्ष्वपि मिथ्योत्तरेषु स्थापकेनैव दृष्टन ग्रहणं प्रमापणीय-मिति ।

[20] यत्तु पित्रादिगृहीतत्वभाषायां तद्ग्रहणाधिकरणत्वेनाभिमतकालापे-क्षया चरमजातस्य तत्पुत्रस्य न जानामीत्यादिकमुत्तरं तदुत्तरप्रतिरूपकं,

---

140 तत्काल : B1 तत्काले ।140 चतुर्विधा : B1M1 चतुर्विधं । 140[2] का-त्यायनो ऽपि : B2B3L कात्यायनः ।141[2] साध्यापह्नवोक्तिरुत्तरान्तर° : LCM2 साध्यव्याप्ति । 141[7] °र्थत एव : LCM2 र्थतः । 141[9] ग्रहणास्क-न्द° : B1(msh)B2 ग्रहणावस्कन्द । 141[12] द्वयं : LCM2 om । 141[17] तत्र : B1 तत्र च । 141[18] °निरस्यं : LCM2 निवेद्यं ।

21 अर्थतो ऽपि स्थापितहेत्वपह्नवासम्भवात् ।

22 न चैवं उत्तराभावादेव तत्र स्थापकस्य जय इति वाच्यं। 23 धर्मव्यवहारे च्छलस्यावश्यनिरस्यत्वेन तत्र स्थापकेन ग्रहणस्यावश्यप्रमापणीयत्वात् । 24 अत एव प्रकाशक्रये नाष्टिकेनादत्तत्वादिकमपि प्रमापणीयमिति स्मरन्ति। 25 अन्यथा दत्तत्वादेर्दूषकेनानुक्तत्वाददत्तत्वादिप्रतिपादनं तत्राधिकं स्यात् । 26 तेन च दत्तत्वाद्यभिधाने तेनैव च तत्प्रतिपाद्यमित्यपि स्यात् 27 नाष्टिकोक्ततत्स्वत्वाधास्कन्दकत्वाद्दत्तत्वादेरिति ।

28 कारणोत्तरं चापरं ।

29 कारणं स्थापकसाध्यस्य धार्यमाणत्वस्य ध्वंसकारणं निर्यातनादि तद्रूपं। 30 अत एव मिथ्योत्तरादस्य भेदः। 31 तद्धि धार्यमाणत्वस्याभावप्रयोजकमग्रहणं न तु ध्वंसकं कदाप्यधारितत्वात् ।32 अत एव प्राङ्न्यायादस्य भेदः ।33 प्राङ्न्यायो हि धार्यमाणत्वसामान्याभावज्ञापक इति ।

34 एतच्च त्रिविधं - 35 पूर्ववाद्युक्तहेत्वपेक्षया अधिकबलं समबलं दुर्बलं च ।

36 तत्राद्यं प्रत्यवस्कन्दनं । 37 तदाह बृहस्पतिः -

142 अर्थिनाभिहितो यो ऽर्थः प्रत्यर्थी यदि तं तथा ।
प्रपद्य कारणं ब्रूयात् प्रत्यवस्कन्दनं हि तत् ॥ [B 3.19]

1 अर्थिनोक्तं गृहीतत्वहेतुं सत्यमित्यभ्युपगम्य यदीदानीमधार्यमाणत्वे परिशोधितत्वादिकं कारणं ब्रूयात् तदुत्तरं प्रत्यवस्कन्दनं भवतीत्यर्थः । 2 यथा मया त्वत्तः शतं गृहीतमिति सत्यं किंतु परिशोधितमिति । 3 इदं च - त्वं मलमिदानीं शतस्य धारयः मत्तः प्रतिदेयतया गृहीततावद्धनत्वादिति भाषायां निर्यातनस्थले व्यभिचारवारणायापरिशोधितत्वे सतीति हेतौ विशेषणं स्थापकस्य हृदिस्थं तस्य चासिद्धिरुत्तरवाक्यार्थः । 4 तथा च हेतुविशेषणासिद्धिपरमिदं कारणोत्तरं ।

5 कात्यायनो ऽपि -

143 अर्थिनाभिहितो यो ऽर्थः प्रत्यर्थी यदि तं तथा ।

---

141[22] °भावादेव : LCM2 भावादेः । 141[23] °निरस्यत्वेन : LCM2 निवेद्यत्वेन । 141[27] °स्वत्वाधास्कन्दक° : B1 स्वत्वा(व msh)स्कन्दक B2 स्वत्वाधवस्कन्दक । 141[33] °ज्ञापक : M1 ज्ञापनार्थक । 142[1] तदुत्तरं : B1M1 तदा तदुत्तरं । 142[5] कात्यायनो ऽपि : B1 कात्यायनेनापि ।

प्रपद्य कारणं ब्रूयादाधर्यं भृगुरब्रवीत् ॥[K 170]

[1] आधर्यं दुर्बलत्वं । [2] पूर्वपक्षस्येति शेषः । [3] नारदः -

144 आधर्यं पूर्वपक्षस्य यस्मिन्नर्थवशाद् भवेत् ।
विवादे साक्षिणस्तत्र प्रष्टव्याः प्रतिवादिनः ॥[N 1.164]

[1] प्रदीपकृतस्तु - [2] कारणं धार्यमाणत्वे कारणं गृहीतत्वं तत् प्रपद्याभ्युपेत्य ब्रूयात् परिशोधनादिकमिति शेषः इत्येवं क्रमेण योजनामर्थादाहुः । [3] अपरिशोधितत्वं च स्थापनाहेतुविशेषणं कण्ठरवेणोक्तमिति चाहुः ।

[4] केचित्तु - [5] प्रपद्य स्थापनाहेतुं प्रतीत्य यद्विपरीतवचनं तत्कारणोत्तरमिति त्रितयपरमेवेदं वाक्यमित्याहुः । [6] तन्न - समहीनबलकारणोत्तरयोः स्थापनाया आधर्यासम्भवे न एतद्वाक्यस्य तदुभयविषयकत्वादिति । [7] वस्तुतस्तु - तद्धनं मत्साधारणं मदविभक्तत्वदर्जितत्वादित्यत्र नैतदेवं त्वद्विभक्तमदर्जितत्वादित्यत्र बलवत्कारणोत्तरे कण्ठोक्तस्याविभक्तत्वस्य खण्डनात् अभियोगध्वंसस्य चाजननान्न प्राचीना व्याख्या किंतु प्रपद्याभ्युपेत्य भाषितहेतुं विशेष्यभागमात्रं कारणमनभियोज्यताप्रयोजकरूपं विभक्तत्वनिर्यातितत्वादि यद् ब्रूते तद् बलवत्कारणोत्तरमिति व्याख्या ज्यायसीति ।

[8] समबलं तु - मदीयेयं भूः क्रमागतत्वादिति भाषायामिदमेवोत्तरं । [9] इदं च सत्प्रतिपक्षत्वपरं ।

[10] दुर्बलोत्तरं तु - विंशतिवर्षादारभ्य ममेयमाधिविषया भूः तावत्समयादारभ्य स्वामिना मय्याहितत्वादिति भाषायां पंचवर्षादारभ्य सा मदीया पंचमेऽब्दे तेन मय्याहितत्वादिति। [11] इदमपि सत्प्रतिपक्षत्वपरं।

145 आधौ प्रतिग्रहे क्रीते पूर्वं बलवत्तरेति [Y 2.23cd]

[1] वचनप्रामाण्याच्च दुर्बलं ।

[2] अत्र च बलवति प्रतिवादिनः अन्त्ययोस्तु स्थापकस्य प्रमाणमनुसंधेयं ।

---

144[3] कण्ठरवेणोक्त° : B1M1 कण्ठरवोक्त । 144[6] न एतद्वा° : B1 नैतद्वा । 144[7] तद्धनं : B1 त्वद्धनं । 144[7] °त्वादि : B1 त्वादिकं । 144[8] °मिदमेवोत्तरं : B3 मेतदेव उत्तरं । 144[8] °पक्ष° : B3LCM2 पक्षित । 144[10] स्वमिना : B3 तत्स्वामिना । 144[12] °पक्ष° : LCM2 पक्षित । 145[2] प्रमाण° : B2 प्रामाण्य ।

[3]तदुक्तं -

146 गुरावभिहिते हेतौ प्रतिवादिक्रिया भवेत् ।
दुर्बले वादिनः प्रोक्ता तुल्ये पूर्वक्रियैव चेति ॥ [?]

[1]पूर्वेति पूर्वोत्तरयोः साक्षिसाम्ये एवं ।

[2]कात्यायनः -

147 कारणात्पूर्वपक्षो ऽपि उत्तरत्वं प्रपद्यते ।
अतः क्रिया सदा प्रोक्ता पूर्वपक्षप्रसाधिनी ॥ [K 211]

[1]कारणात् बलवत्त्वात् ।[2] उत्तरत्वं उत्तमत्वं ।

[3]प्राङ्न्यायोत्तरं तु - अस्मिन्नर्थे मयायं पूर्वं जित इति रूपं । [4]यदाह बृहस्पतिः -

148 आचारेणावसन्नो ऽपि पुनर्लेखयते यदि ।
सो ऽभिधेयो जितः पूर्वं प्राङ्न्यायस्तु स उच्यते ॥[B 3.21]

[1]आचारेण व्यवहारेण । [2]अवसन्नो भङ्गी । [3]लेखयते भाषां ।

[4]अत्र चोत्तरवादिन एव क्रिया [5]तेनैव पूर्वजयस्य विभावनीयत्वात् । [6]तथा च हारीतः -

149 प्राङ्न्यायकारणोक्तौ तु प्रत्यर्थी निर्दिशेत् क्रियां ।
मिथ्योक्तौ पूर्ववादी तु प्रतिपत्तौ न सा भवेत् ॥[H 1.29]

[1]कारणोक्तौ बलवत्कारणोक्तौ ।

[2]अत्र च प्राङ्न्याये बलवत्पूर्वप्रमाणबाधः स्थापनाहेतुदोषः । [3]निर्णीतत्वेन संशयाभावादसिद्धिरित्यन्ये ।

[4]अथोत्तराभासाः ।

[5]तत्र कात्यायनः -

150 पक्षैकदेशे यत्सत्यमेकदेशे च कारणं ।
मिथ्या चैवैकदेशे स्यात् संकरात्तदनुत्तरं ॥[K 189]

---

146 चेति : B1 हि B2 च LCM2 च इति ।147 °प्रसाधिनी : LCM2 प्रसाधनी । 147[3] पूर्वं : B1M1 पूर्वं । 148[4] अत्र चोत्तर° : B2 अत्रोत्तर । 149 °न्याय° : B2B3 न्याये । 149 तु : B2B3 च । 149[2] °दोषः : LCM2 दोषश्च । 149[3] निर्णीत° : B3 निर्णीतार्थ। 149[3] °त्यन्ये : M1 त्यर्थः।

[1] अत्र केचित् – [2]यथा शतग्रहणे भाषिते पंचाशतं धारयाम्येव पंचविंशतिः परिशोधिताः पंचविंशतिर्न गृहीता इत्याद्युदाहरणं । [3]अत्र च कात्यायनवचनं बीजं । [4]तथा हि –

151 न चैकस्मिन् विवादे तु क्रिया स्याद्वादिनोर्द्वयोः ।
न चार्थसिद्धिरुभयोर्न चैकस्मिन् क्रियाद्वयमिति ॥ [K 190]

[1] एकत्र द्वयोर्वादिनोर्न क्रिया द्वयी च न क्रिया द्वयोश्च न जय इति वाक्यार्थः । [2]यथोक्तसंकीर्णोत्तरस्य च ग्राह्यत्वे तत्सर्वं प्रसज्येतेत्याहुः ।
[3] तन्मन्दं – [4]न हीदृशो विषय एव न सम्भवति [5]बहुशो दर्शनात् । [6] न चेदृशमुत्तरं न देयं [7]यथावस्थितार्थोत्तरदानस्य निषेद्धुमशक्यत्वात् ।
[8] न च सकल एवाक्षेपे मिथ्योत्तरमेव कार्यं शतस्यागृहीतत्वादिति वाच्यं ।
[9] न हि विज्ञा एव विवदन्ते किंत्वज्ञा अपि । [10] न च त इत एव पर्यनुयोज्याः किंतु तत्त्वतो निरूप्याः –

152 छलं निरस्य भूतेन व्यवहारान्नयेन्नृपः [Y 2.19ab]

[1] इत्यादिवचनात् ।
[2] किंच – न सदुत्तरान्तरमत्र सम्भवतीत्यत एवास्य हेयता । [3] उपायस्योपायान्तरादूषकत्वात् । [4] न च वचनादेवास्य हेयता, [5]एतद्वचनस्यादृष्टार्थतापत्तेः ।
[6] अपि च – शतं न गृहीतमित्यस्य नाग्रहणमात्रमर्थः [7]शतपदानर्थक्यापत्तेः । [8]नापि शताग्रहणं [9]विशेषनिषेधे शेषाभ्यनुज्ञापत्तेः । [10]नापि शतपदं यद्वाप्राप्तानुवाद [11] एवमेकदेशस्य गृहीतस्य गृहीतत्वविभावनादेव स्थापको निरपवादमेव तावद्धनं लभेतेत्यनिष्टफलकमुत्तरं स्यात् ।
[12] तस्मादेकदेशे एकस्मिन्नेव देशे यदुत्तरं संकीर्यते तदनुत्तरं शेषं एकदेशपदद्वयं चानुवादः । [13] तथा हि मया शतं न गृहीतं गृहीतं वा परिशोधितं धारयाम्येवेत्यादि ।

[14] यत्तु भिन्नभिन्नावच्छेदेन कारणादिस्पर्शि तत्सदुत्तरमेव [15]अवच्छेदभेदेन साङ्कर्यस्यैवाभावात् । [16] अत्रैव हारीतेनापि मीमांसितं –

---

150[2] इत्याद्युदा° : B2M1L इत्युदा । 150 [3] च : B2LCM2 om । 150 [4] तथा हि : B2 om । 151[2] च : B2 om । 151[2] प्रसज्येते° : B1 प्रसजेते । 151[7] °स्थितार्थो° : B1 स्थितो । 151[10] त : LCM2 om । 152[4] वचनादेवा° : M1 वचनबलादेवा । 152[7] शतपदा° : LCM2 तत्पदा । 152[13] शतं : B1 मया शतं । 152[13] शतं ... °वेत्यादि : LCM2 शतं धारयामि परिशोधितं न गृहीतं वेत्यादि । 152[15] अवच्छेद° : LCM2 अवच्छेदक ।

153 मिथ्योत्तरं कारणं च स्यातामेकत्र चेदुभे ।
सत्यं चापि सहानेन तत्र ग्राह्यं किमुत्तरं ॥ [H 1.23]

154 यत्प्रभूतार्थविषयं यत्र वा स्यात् क्रियाफलं ।
उत्तरं तत्तु विज्ञेयमसंकीर्णमतो ऽन्यथा ॥ [H 1.24abcd]

[1]यदिति - प्रचुरार्थविषयकमुत्तरांशमादाय विचार उपक्रमणीयः । [2]तुल्यार्थविषयत्वे तु यत्र क्रियाया भुक्त्यादेः फलं निर्णयः शीघ्रं भवति तदंशस्यैव प्रमाणं ग्राह्यं । [3]तदुक्तं - [4]यत्र वा स्यात् क्रियाफलमिति । [5]इदं चोत्तरमसंकीर्णमेव । [6]यत्त्वितो ऽन्यथा तत्संकीर्णं हेयमिति । [7]तदयं वर्तुलार्थः - [8]शताभियोगे पंचाशत् परिशोधिताः पंचविंशतिर्धार्यन्ते पंचविंशतिस्तु नैव गृहीता इत्युत्तरे कारणभाग आदौ विचार्यः । [9]पश्चात्तु अपह्नुताः पंचविंशतिरपि अर्थिप्रमाणेन वा साध्याः प्रत्यर्थिप्रमाणेन वा बाध्याः ।

[10]न चैवं सत्येतद्वचनविरोध एव । [11]न्यायवचनानामुत्सर्गतो न्यायमूलकत्वेनैव तद्वचनस्यापि लघ्वर्थप्रमाणपरिग्रहाबाधकत्वात् ।[12] सति निर्णयप्रमाणे च तदंशे ऽपि प्रकरणारम्भकसंशयस्यावश्यनिरस्यत्वात् । [13]न च यत्प्रभूतार्थविषयमित्यादिवचनवशादेव लघ्वर्थप्रमाणाग्राह्यता, [14]तथा सत्येतत्स्मृतीनां श्रुतिमूलतापत्तेः । [15]न चैतदिष्टमेव, [16]असम्भवन्मूलान्तरत्वस्य तत्रोपाधित्वात् । [17]यूपहस्त्यादिस्मृतौ तथा सिद्धान्तत्वात्। [18]आसां च न्यायमूलकत्वस्यैव सम्भवात् ।

155 मिथ्याकारणसम्भेदे ग्राह्यं कारणमुत्तर- [H 1.24ef]

[1]मित्यादिकमपि वचनमेवमेव नेयं ।
[2]तस्मात् यावत् प्रकरणारम्भकसंशयो ऽनुवर्तते निर्णायकं च प्रमाणं लभ्यते तावद्विचारणीयमिति परमार्थः ।
[3]भवदेवप्रदीपादयो ऽप्येवं ।

[4]कात्यायनः -

---

154[1] प्रचुरा° : CM2 प्रभूता । 154[1] प्रचुरार्थ° ... रांशमादाय : B1 प्रचुरांशमादाय । 154[2] तुल्यार्थविषयत्वे : B1 तुल्यार्थकत्वे । 154[6] यत्त्वितो : M1 यद्यतो । 154[8] °विंशतिस्तुनैव : B1 विंशतिर्नैव B2 विंशतिस्तु न । 154[9] प्रत्यर्थि° ... बाध्याः : LCM2 om । 154[13] °वशादेव : B1B2 वलादेव । 155[1] °त्यादिकमपि वचनमेवमेव : B1 त्यादिवचनमप्येवमेव ।

156 प्रकृतेन त्वसम्बद्धमत्यल्पमतिभूरि च ।
पक्षैकदेशव्याप्येव तत्तु नैवोत्तरं भवेत् ॥ [K 188]

157 असम्बद्धपदव्यापि निगूढार्थं तथाकुलं ।
व्याख्यागम्यमसारं च नोत्तरं शस्यते बुधैः ॥ [K 174]

[1]प्रकृतेन प्रकृतभाषया । [2]अत्यल्पं प्रतिज्ञामात्रं न धारयामीत्यादि । [3]अतिभूरि बहुहेतुकं । [4]पक्षैकदेशव्यापि भाषैकदेशाच्छादकं । [5]असम्बद्धपदव्यापि अनन्वितार्थकपदव्याप्तं । [6]निगूढार्थमप्रसिद्धार्थं । [7]आकुलं परस्परविरुद्धार्थकं । [8]व्याख्यागम्यं लक्षणादिना विवक्षितार्थबोधकं । [9]असारं जात्युत्तरं ।

[10]तथा -

158 प्रपद्य कारणं पूर्वमन्यद् गुरुतरं यदि ।
प्रतिवाक्यगतं ब्रूयात् साध्यते तद्धि नेतरत् ॥ [K 191]

[1]आदौ लघुकारणमभिधाय पश्चाद्बलवत्तदभिदधतस्तावद्बलवदेव ग्राह्यं तत्त्वनिर्णयार्थमित्यर्थः ।

[2]बृहस्पतिः -

159 पूर्वपक्षे यथार्थं तु न दद्यादुत्तरं तु यः ।
प्रत्यर्थी दापनीयः स्यात् सामादिभिरुपक्रमैः ॥ [B 3.7]

160 प्रियपूर्वं वचः साम भेदस्तु भयदर्शनं ।
अर्थापकर्षणं दण्डस्ताडनं बन्धनं तथा ॥ [B 3.8]

161 उपायैर्देश्यमानस्तु न दद्यादुत्तरं तु यः ।
अतिक्रान्ते सप्तरात्रे जितोऽसौ दण्डमर्हति ॥ [B 2.4]

162 उन्मत्तमत्तनिर्धूता महापातकदूषिताः ।
जडातिक्रुद्धबालाश्च विज्ञेयास्ते निरुत्तराः ॥ [B 1.173]

[1]पूर्वपक्ष इति - उत्तरदानशक्तः सन् सामादिनापि पृष्टो यः सप्तरात्रपर्यन्तेनापि नोत्तरं ददाति स भङ्गी व्यवहर्तव्यः । [2]उन्मत्तादयस्तु स्वज्ञपरद्वारेणोत्तरं दापयितव्या इत्यर्थः ।

[3]तथा -

---

156 ०सम्बद्ध०: M1 सम्बन्ध । 156 च : CM2 यत् । 156 ०देश० : M1 देशै।
157 शस्यते : M1 गम्यते । 162[1] सामादिनापि : B1B2 सामादिना ।

163 उभयोर्लिखिते कार्ये प्रारब्धे तत्त्वनिर्णये ।
अयुक्तं तत्र यो ब्रूयात् स तदर्थात्तु हीयते ॥ [B? = K 206cdef]

164 पूर्वोत्तरे निविष्टे तु विचारे सम्प्रवेशिते । [B 3.42ab]
निर्णिक्तं तु तयोस्तत्र वचनं वादिनोर्भृगुः ॥ [B?]

165 मोहाद्वा यदि वा शाठ्यात् यन्नोक्तं पूर्ववादिना ।
उत्तरान्तर्गतं वापि तद् ग्राह्यमुभयोरपि ॥ [B 2.17 = K 193]

166 श्रुतं च लिखितं चैव चिन्तितं तु विशोधितं । [B 2.29cd]
प्रथमे ऽहनि तस्यैव विवादविधिरुच्यते ॥ [B?]

[1] पूर्वोत्तरे भाषायामुत्तरे च संवृत्ते विचारे प्रारब्धे वादिनोर्वचनं नि-र्णिक्तं शाधितं ग्राह्यं ।[2] तदेव प्रपंचयति - [3]मोहादित्यादि । [4]शाठ्यं तात्कालिकवाक्स्तम्भादि । [5]एवं च विचारप्रवृत्तिपर्यन्तं भाषोत्तरयोः शोधने सिद्धे

167 प्रतिज्ञां पूरयेद्वादी यावन्नोत्तरदर्शन- [NQ 2.22ab]
[1] मित्यत्राप्युत्तरपदं विचारारम्भपरमिति द्रष्टव्यं ।

[2] इति व्यवहारचिन्तामणौ
उत्तरपादः ।

- - - - - - - - - -

---

163 तदर्थात्तु : LCM2 तदर्थाच्च । 166 विशोधितं : B1 विशोधनं । 166[1] संवृत्ते : LCM2 सम्प्रवृत्ते । 167[2] व्यवहारचिन्तामणौ : LCM2 om ।

(167) [3] अथ क्रियापादः ।

[4] तत्रोत्तराभासे क्रियानपेक्षा एव भङ्गः । [5] सदुत्तरे तु क्रिया देया ।
[6] तत्र याज्ञवल्क्यः -

168 ततोऽर्थी लेखयेत्सद्यः प्रतिज्ञातार्थसाधकं । [Y 2.7cd]
तत्सिद्धौ सिद्धिमाप्नोति विपरीतमतोऽन्यथा ॥ [Y 2.8ab]

[1] अर्थी वादी प्रतिवादी च । [2] सद्य इति - तेन प्रमाणनिर्देशे प्रमाणप्रवर्तने च न कालातिपातः कार्य इत्यर्थः । [3] तदाह कात्यायनः -

169 न कालहरणं कार्यं राज्ञा साक्षिप्रभाषणे ।
महान् दोषो भवेत्कालाद्धर्मव्यावृत्तिलक्षणः ॥ [K 339]

[1] साक्षिणामुपन्यासे निगादने च विलम्बो न कार्योऽन्यथा साक्षिकरणसाक्षिसंधानादिना धर्मलोपापत्तिरित्यर्थः ।

[2] क्रिया च द्विविधा । [3] तदाह बृहस्पतिः -

170 द्विप्रकारा क्रिया प्रोक्ता मानुषी दैविकी तथा ।
एकैकनेकधा भिन्ना ऋषिभिस्तत्त्ववादिभिः ॥ [B 4.6]

171 साक्षिलेखानुमानं च मानुषी त्रिविधा स्मृता । [B 4.8ab]
घटाद्या धर्मजान्ता च दैविकी नवधा स्मृता ॥ [B 4.7cd]

[1] लेखो भोगस्याप्युपलक्षणं । [2] धर्मजान्ताश्च नवाप्यनेनैव वक्ष्यन्ते ।

[3] अत्र दैविकी द्वेधा, शपथदिव्यभेदात् । [4] तदाह बृहस्पतिः -

172 सत्यं वाहनशस्त्राणि गोबीजकांचनानि च ।
देवब्राह्मणपादाश्च पुत्रदारशिरांसि च ॥ [B 8.33]

173 एते तु शपथाः प्रोक्ताः स्वल्पेऽर्थे सुकरास्तथा ।
साहसेष्वभिशापेषु दिव्यान्याहुर्विशोधनं ॥ [B 8.34]

[1] हलायुधेन तु दिव्यशपथयोरभेद एव व्यवस्थापितः ।

---

168[2] ०प्रवर्तने : CM2 वर्तने । 169[1] कार्योऽन्यथा : B2 कार्यः अन्यथा । 169[1] ०संधाना० : LCM2 सम्बन्धा । 170 दैविकी : B2M1LCM2 दैवकी । 171 दैविकी : B1B2 दैवकी । 171[1] लेखो : B2L लेखा । 171[3] द्वेधा : CM2 द्विविधा । 173 सुकरास्तथा : LCM2 सुकराः स्मृताः । 173[1] एव व्यवस्थापितः : B1 एवोक्तः ।

[2] कात्यायनः -

174 यद्येको मानुषीं ब्रूयादन्यो ब्रूयात्तु दैविकीं ।
मानुषीं तत्र गृह्णीयान्न तु दैवीं कदाचन ॥ [K 218]

175 यद्येकदेशव्याप्तापि क्रिया विद्येत मानुषी ।
सा ग्राह्या न तु पूर्णापि दैविकी वदतां नृणां ॥ [K 219]

[1] एकदेशव्याप्तापीति - स्तुतिर्वा अर्थान्तरव्याप्त्येकदेशविषयकं वा एकदेशविभावने ऽपि सर्वं दद्यामिति पणबन्धविषयकं वा ।

176 क्रिया न दैविकी प्रोक्ता विद्यमानेषु साक्षिषु ।
लेख्ये सति च वादेषु न स्याद्दिव्यं न साक्षिणः ॥ [K 223]

[1] तथा -

177 अनेकार्थाभियोगे तु यावत्संसाधयेद्धनी ।
साक्षिभिस्तावदेवासौ लभते साधितं धनं ॥ [K 473]

[1] वस्तूनां यत्रान्योन्याविनाभावो नास्ति तद्विषयमिदं ।

[2] व्यासः -

178 प्राङ्न्यायकारणोक्तौ तु प्रत्यर्थी साधयेत् क्रियां ।
मिथ्योत्तरे पूर्ववादी प्रतिपत्तौ न सा भवेत् ॥ [Vy 1.29]

179 मिथ्या क्रिया पूर्ववादे कारणे प्रतिवादिनः ।
प्राङ्न्यायविधिसिद्धौ च जयपत्रं विनिर्दिशेत् ॥ [Vy ?]

[1] मिथ्या मिथ्योत्तरे सति पूर्ववादिनः क्रिया सा च मानुषी ग्राह्या । [2] न गृहीतं मयेत्यत्र हि प्रत्यर्थिनः सा न भवतीति न्यायो ऽत्र मूलं । [3] न चाभावो न बोध्य इत्यतो ऽत्रापि भावस्यैव बोध्यता, [4] अभिशापे अभावस्यैव परीक्षणात् । [5] एतेन सुकरत्वात् प्रथमोपस्थितत्वाच्च भावबोधनमित्यपास्तं ।

[6] न च क्रियापदं यावदर्थकं प्राङ्न्यायकारणयोरन्वीयते तावदर्थकमेव मि-

---

175[1] °देशविषयकं वा : B1 विषयम्वा । 175[1] पणबन्धविषयकं वा: B1 पणविषयं वा । 177 तु : LCM2 षु । 177[1] तद्विषयमिदं : B1 तद्विषयमिति । 178 साधयेत् : CM2 निर्दिशेत् । 178 मिथ्योत्तरे पूर्ववादी : LCM2 मिथ्योक्तौ पूर्ववादी तु । 179[1] सा च : B1 om । 179[2] भवतीति : B1B2 सम्भवतीति । 179[3] इत्यतो ऽत्रापि : LCM2 इत्यतोपि तत्र । 179[4] परीक्षणात : B1 परीक्षणीयत्वात् ।

थ्योत्तरे ऽप्यनुषज्यते । [7]तेन मिथ्योत्तरे ऽर्थिन एवादृष्टमपीति वाच्यं । [8]श्रूयमाणशब्दे पुनरन्वयमात्रमेव ह्यनुषङ्गो न त्वर्थावैषम्यसहितं गौरवात् ।

[9]तदभावे तु दैवी । [10]तदाह याज्ञवल्क्यः -

180 प्रमाणं लिखितं भुक्तिः साक्षिणश्चेति कीर्तितं ।
एषामन्यतमाभावे दिव्यान्यतममुच्यते ॥ [Y 2.22]

[1]सा प्रतिवादिनः -

181 न कश्चिदभियोक्तारं पुनर्दिव्ये नियोजयेत् ।
अभियुक्ताय दातव्यं दिव्यं दिव्यविशारदैरिति [K 244=411]

[1]वाक्यस्य दिव्यप्राप्तौ पूर्वार्थिनाभियोक्तुस्तन्निषेधे ऽर्थतो ऽभियोज्यस्य तद्विधावुत्तरार्थेन तन्नियमनात् । [2]सिद्धे सत्यारम्भस्य नियमार्थत्वात् । [3]तस्य तु संदिहानत्वे पापित्वे वा तच्छून्यस्यार्थिन एवानन्यगतिकत्वात्। [4]शौचनिश्चययोस्तौल्ये स्वेच्छस्य,[5]रुच्या वान्यतरः कुर्यादिति वचनात्। [6]इच्छातौल्ये प्रत्यर्थिन एव, [7]अभियुक्तायेत्यादिवचनादेवेति संक्षेपः ।

[8]बलवत्कारणोत्तरे तु प्रतिवादिनः क्रियेत्याह कात्यायनः -

182 प्रपद्य कारणं पूर्वमन्यद् गुरुतरं यदि ।
प्रतिवाक्यगतं ब्रूयात् साध्यते तद्धि नेतरत् ॥ [K 191]

[1]धार्यमाणत्वस्य कारणं ऋणग्रहणं भाषितमभ्युपगम्य तदाधर्यनिमित्तं उत्तरवाक्यगतं यदि गुरुतरं कारणं परिशोधनादिकं ब्रूयात् तदा प्रतिवादिना तत् साध्यते न त्वितरत् समबलमल्पबलं वेत्यर्थः ।

[2]तथा -

183 अर्थिनाभिहितो यो ऽर्थः प्रत्यर्थी यदि तं तथा ।
प्रपद्य कारणं ब्रूयादाधर्यं भृगुरब्रवीत् ॥ [K 170]

[1]कारणं भाषितस्य बाधकारणं । [2]आधर्यं पूर्वपक्षस्येति शेषः ।

[3]नारदः -

184 आधर्यं पूर्वपक्षस्य यस्मिन्नर्थवशाद् भवेत् ।
विवादे साक्षिणस्तत्र प्रष्टव्याः प्रतिवादिनः ॥[N 1.164]

---

180[1] सा : B2 सा च । 181 °विशारदैरिति : B2LCM2 विशारदैः इति । 181[1] तन्नियमनात् : M1 तन्नियमात् । 181[4] °निश्चययोस्तौल्ये : B1 निश्चययोश्च तौल्ये । 182[1]भाषितमभ्युपगम्य : B2 भाषितमपि अभ्युपगम्य ।

[1] साक्षिण इति दृष्टादृष्टक्रियोपलक्षणं ।

[2] समबलकारणाभिधाने तु पूर्ववादिन एव क्रियेत्याह नारद: -

185 द्वयोर्विवदतोरर्थे द्वयो: सत्सु च साक्षिषु ।
पूर्ववादो भवेद्यस्य भवेयुस्तस्य साक्षिण: ॥ [N 1.163]

[1] याज्ञवल्क्य: -

186 साक्षिषूभयत: सत्सु साक्षिण: पूर्ववादिन: ।
पूर्वपक्षेऽधरीभूते भवन्त्युत्तरवादिन: ॥ [Y 2.17]

[1] इदं तूभयवादिसाक्षिणां सर्वथा साम्ये, अन्यथाज्ञापत्ते: ।

[2] न च -

187 समत्वं साक्षिणां यत्र दिव्यैस्तत्र विशोधयेदिति [K 232ab]

[1] कात्यायनवचनेन सह विरोध:, [2] तस्यान्यविषयत्वात् । [3] तथा हि यत्रैकतरस्य वादिन: साक्षिणां परस्परविरुद्धं निगदतां निगदान्न संशयोच्छेद: तत्रादृष्टेन निर्णय: कार्य इति तदर्थत्वात् ।

[4] वैषम्ये तु बृहस्पति: -

188 साक्षिद्वैधे प्रभूतास्तु ग्राह्या: साम्ये गुणाधिका: ।
गुणिद्वैधे क्रियायुक्ता: तत्साम्ये शुचिमत्तरा: ॥ [B 5.46]

189 क्रिया न दैविकी प्रोक्ता विद्यमानेषु साक्षिषु ।
लेख्ये सति च वादेषु न स्याद्दिव्यं न साक्षिण: ॥ [B 4.12]

[1] एवं प्राङ्न्यायेऽपि प्रतिवादिन: प्रमाणमाह व्यास: -

190 प्राङ्न्याये जयपत्रेण प्राड्विवाकादिभिस्तथा ।
सत्यवादी समाप्नोति यदुक्तेन निवेदितं ॥ [Vy 1.30]

[1] बृहस्पति: -

191 प्रतिज्ञां भावयेद्वादी प्रत्यर्थी कारणं तथा ।
प्राग्वृत्तवादी विजयं जयपत्रेण भावयेत् ॥ [B 4.3]

---

184[1] दृष्टादृष्टक्रियो° : B1 दृष्टादृष्टो । 184[2] क्रियेत्याह : LCM2 क्रिया इत्याह । 187[3] कार्य : M1 om । 187[3] इति तदर्थत्वात् : B1 इत्यर्थत्वात् । 189 प्रोक्ता : LCM2 युक्ता । 189[1] ऽपि : B1 च । 190 सत्य° : B1B2 सत्यै ।

[1] प्रतिज्ञामिति - प्रतिज्ञातहेतुं गृहीतत्वादिकं अपह्नुतमर्थी दृष्टेन साधये-दित्यर्थः । [2]कारणं बलवत्कारणं प्रत्यर्थी दृष्टेनादृष्टेन वा भावयेत् ।

[3] अथ प्रसङ्गाज्जयपत्रलक्षणं ।

[4] तत्र कात्यायनः -

192 अर्थिप्रत्यर्थिवाक्यानि प्रतिज्ञा साक्षिवाक् तथा ।
निर्णयश्च तथा तस्य यथा चावधृतं स्वयं ॥ [K 259]

193 एतद्यथाक्षरं लेख्यं यथापूर्वं निवेशयेत् ।
सभासदश्च ये तत्र धर्मशास्त्रविदस्तथा ॥ [K 260]

[1] बृहस्पतिः -

194 यद्वृत्तं व्यवहारात्तु पूर्वपक्षोत्तरादिकं ।
क्रियावधारणोपेतं जयपत्रे ऽखिलं लिखेत् ॥ [B 6.27]

195 पूर्वोत्तरक्रियायुक्तं निर्णयान्तं यदा नृपः ।
प्रदद्याज्जयिने लेख्यं जयपत्रं तदुच्यते ॥ [B 6.26]

[1] वसिष्ठः -

196 यथोपन्यस्तसाध्यार्थसंयुक्तं सोत्तरादिकं ।
सावधारणकं चैव जयपत्रकमुच्यते । [Va ?]

197 प्राड्विवाकादिमुद्राङ्कं मुद्रितं राजमुद्रया ॥ [Va ?]

[1] तथा -

198 निरस्ता तु क्रिया यत्र प्रमाणेनैव वादिना ।
पश्चात्कारो भवेत्तत्र न सर्वासु विधीयते ॥ [K 264cdef]

[1] पश्चात् क्रियत इति पश्चात्कारो जयपत्रं ।

[2] यत्र वादिवाक्यतात्पर्यालोचनया जयावधारणं तत्रैव जयपत्रं न त्वन्यत्रे-ति केचित् । [3] तन्न - [4] पूर्वजयविभावनस्यान्यत्रापि कृत्यत्वेन सर्वत्रैव जय-पत्रस्य न्यायतः प्राप्तेरिति ।

---

191[1] प्रतिज्ञातहेतुं : B1 प्रतिज्ञाहेतुं । 191[2] दृष्टेनादृष्टेन वा : CM2 दृष्टेन। 192 चावधृतं : B2 चावधृतं । 198 वादिना : M1 वादिनां । 198[2] °तात्पर्यालोचनया : B1 पर्यालोचनया । 198[2] त्वन्यत्रेति : B2 त्वन्यत्रापीति । 198[4] सर्वत्रैव : B2LCM2 om ।

[5]भाषोत्तरे क्रिया च पत्रसाक्ष्यादिका निर्णयश्च जयपराजयावधारणं निर्णयकालावस्थिता मध्यस्थाश्चेत्यादिकं सर्वं लेखनीयं निरूपणस्य सम्यक्त्वप्रदर्शनार्थं । [6] भाषोत्तरलेखनं च हेत्वन्तरेण पुनर्न्याये प्रत्यवस्थाननिरासार्थं । [7] न हि न गृहीतं मयेति मिथ्योत्तरेण जितस्य पुनः परिशोधितं मयेति प्रत्यवस्थानं भवति । [8] तदाह कात्यायनः -

क्रियां बलवतीं त्यक्त्वा दुर्बलां योऽवलम्बते ।
स जयेऽवधृते सभ्यैः पुनस्तां नाप्नुयात् क्रियां ॥ [K 221]

निर्णीते व्यवहारे तु प्रमाणमफलं भवेत् ।
लिखितं साक्षिणो वापि पूर्वमावेदितं न चेत् ॥ [K ? = NMā 1.62]

201 यथा पक्वेषु धान्येषु निष्फलाः प्रावृषो गुणाः ।
निर्णीतव्यवहाराणां प्रमाणमफलं तथा ॥ [K ? = NMā 1.63]

[1] त्यक्त्वेति - बुद्धिपूर्वकत्यागावगतेः तत्र क्रियान्तरालाभः ।

[2] अथ ग्राह्यक्रियानिरूपणं ।

[3] तत्र कात्यायनः -

202 अनुमानाद् गुरुः साक्षी साक्षिभ्यो लिखितं गुरु ।
अव्याहता त्रिपुरुषी भुक्तिरेभ्यो गरीयसी ॥ [K 315]

[1] अनुमानं प्रत्याकलितं । [2]तदाह मनुः -

203 बाह्यैर्विभावयेल्लिङ्गैर्भावमन्तर्गतं नृणां ।
स्वरवर्णेङ्गिताकारैश्चक्षुषा चेष्टितेन च ॥ [M 8.25]

[1]स्वरो विकृतो गद्गदत्वादि । [2]वर्णोऽप्यस्वाभाविकः । [3] इङ्गितं स्वेदवेपथुरोमांचादि । [4] आकारो विकृतः । [5] चक्षुषा कातरेण । [6] चेष्टितेन स्थानत्यागादिना । [7] एषां चानन्यथासिद्धेरतिदुर्निरूप्यत्वात् एभ्यः साक्षी बलवानित्यर्थः ।

[8] तथा -

204 ब्रूहीत्युक्तश्च न ब्रूयादुक्तं च न विभावयेत् ।
न च पूर्वापरं विद्यात्तस्मादर्थात् स हीयते ॥ [M 8.56]

---

198[5] निर्णयश्च : B2LCM2 निर्णयः । 198[6] °लेखनं : B1 लिखनं । 201 निष्फलाः : B1 निःफलाः । 201[1] तत्र : M1 तत् । 201[3] °कारैश्चक्षुषा : B1 कारैः चक्षुषा । 203[1] गद्गदत्वादि : B1 गद्गदादिः । 204 ब्रूहीत्युक्तश्च : B1 ब्रूहीत्युक्तोऽपि । 204 ब्रूयाद् : LCM2 ब्रूयात् ।

205 सन्ति ज्ञातार इत्युक्त्वा दिशेत्युक्तो दिशेन्न यः ।
धर्मस्थः कारणैरेतैर्हीनं तमपि निर्दिशेत् ॥[M 8.57]

206 अभियोक्ता न चेद् ब्रूयात् वध्यो दण्ड्यश्च धर्मतः ।
न चेत्त्रिपक्षाद् ब्रूयात्स धर्मं प्रति पराजितः ॥[M 8.58]

[1] धर्मस्थो विचारकः । [2] हीनं सम्भावितहानिकं । [3] पराजित इति - भङ्गानन्यथासिद्धेरतिनिपुणेनावधारणे स पराजितो व्यवहार्य इत्यर्थः ।

207 न परेण समुद्दिष्टानुपेयात् साक्षिणो रहः ।
भेदयेच्चैव नान्येन हीयेतैवं समाचरन् ॥ [N 1.165]

208 पलायतेऽभियुक्तश्च मौनी साक्षिपराजितः ।
स्वयमभ्युपपन्नश्च अवसन्नश्चतुर्विधः ॥ [NMā 2.32]

209 अन्यवादी क्रियाद्वेषी नोपस्थायी निरुत्तरः ।
आहूतः प्रपलायी च हीनः पंचविधः स्मृतः ॥ [NMā 2.33]

[1] उपेयादुपजापार्थमिति शेषः । [2] अन्येन दूतादिना । [3] पलायत इति - अत्रावसन्नचतुष्टयमध्ये आद्यौ सम्भावितभङ्गौ अन्त्यौ निर्णीतभङ्गौ ।

[4] कात्यायनः -

210 लेखयित्वा तु यो वाक्यं न्यूनमभ्यधिकं पुनः ।
वदेद्वादी स हीयेत नाभियोगं तु सोऽर्हति ॥ [K 197]

[1] एतच्च पूरणसमयातिक्रमे ज्ञेयं ।

[2] बृहस्पतिः -

211 साक्षिणस्तु समुद्दिश्य यस्तु तान्न निगादयेत् ।
त्रिंशद्रात्रात्त्रिपक्षाद्वा हानिस्तस्योपजायते ॥ [B 3.33]

[1] अत्र कार्यगौरवलाघवाभ्यां समयविकल्पः ।

[2] नारदः -

212 सर्वेष्वथ विवादेषु वाक्छले नावसीदति ।
पशुस्त्रीभूम्यृणादाने शास्योऽप्यर्थान्न हीयते ॥ [NMā 2.25]

[1] पश्वादिविवादेषु हानिहेतुभिः शास्यतामापन्नोऽपि न हीयते न पराजित इत्यर्थः ।

[2] बृहस्पतिः -

---

212 सर्वेष्वथ : B2 सर्वेष्वेव ।

213 आचारकरणे दिव्ये कृत्वोपस्थाननिर्णयं ।
नोपस्थितो भवेद्वादी छलं तत्र न कारयेत् ॥ [B 3.40]
214 दैवराजकृतो दोषस्तस्मिन् काले यदा भवेत् ।
अवधित्यागमात्रेण न भवेत्स पराजित: ॥ [B 3.41]

[1] आचारो व्यवहार: । [2] छलं पराजयं ।
[3] दैवेति - अनुपस्थाने भङ्गमङ्गीकृत्यापि दैवादेरनुपस्थितस्यापि न भङ्ग इत्यर्थ: ।

[4] तथा -
215 पूर्वोत्तरे निविष्टे तु विचारे सम्प्रवर्तिते ।
प्रशमं ये मिथो यान्ति दाप्यास्ते द्विगुणं दमं ॥ [B 3.42]

[1] ये वादिनो विचारमारुह्य परस्परं समाचरन्ति ते विवादपदाद् द्विगुणं दण्ड्या: ।

[2] एतच्चानुमानमतिनिपुणस्थेयवेधतया न सकलाकलनीयमतो दुर्बलं ।

[3] इतो ऽपि दिव्यं दुर्बलं । [4] तदाह कात्यायन: -
216 प्रमाणैर्हेतुना वापि दिव्येनैव तु निर्णयं ।
सर्वेष्वेव विवादेषु सदा कुर्यान्निराधिप: ॥ [K 241]
217 पूर्वाभावे तु यत्नेन नान्यथैव कदाचन ॥ [K 243ab]

[1] प्रमाणैर्भुक्तिलिखितसाक्षिभि: । [2] हेतुना अनुमानेन । [3] एवं च भुक्ति-लिखितसाक्ष्यनुमानदिव्यानां पूर्वं पूर्वं बलवत् उत्तरोत्तरमबलमिति पूर्वलाभे सति नोत्तरादर इत्यर्थ: ।

[4] कात्यायन: -
218 लिखितं साक्षिणो भुक्ति: प्रमाणं त्रिविधं स्मृतं ।
लेशोद्देशश्च युक्तिश्च दिव्यानीह विषादय: ॥ [K 214]
219 ऋणे लेख्यं साक्षिणो वा युक्तिलेशादयो ऽपि वा ।
दैविकी वा क्रिया प्रोक्ता प्रजानां हितकाम्यया ॥ [K 233]

[1] लेशो ऽन्यथानुपपन्नो धर्मस्तस्योद्देश: परामर्ष: । [2] तेन परामृष्यमाणो

---

215[1] विचार° : B2 विवाद । 217[3] बलवत् : B1 वलवद् । 218 लेशोद्देशश्च युक्तिश्च : B2 लेशोद्देशस्तथा युक्ति: M1 लेशोद्देशस्तु युक्तिश्च । 219 दैविकी : CM2 दैवकी । 219[1] धर्मस् : B2 धर्म: ।

ऽन्यथानुपपन्नो धर्म इत्यर्थः ।

[3]पितामहः -

220 स्थावरेषु विवादेषु दिव्यानि परिवर्जयेत् ।
साक्षिभिर्लिखितेनाथ भुक्त्या वा तान् प्रसाधयेत् ॥ [Pi 39]

[1]इदं तु साक्ष्यादीनामत्र प्रायिकतया तदादरणार्थं । [2]तदभावे तु दिव्यमपि कार्यमन्यथा संदेहतादवस्थ्यात् ।

[3]कात्यायनः -

221 वाक्पारुष्ये च भूमौ च दिव्यं न परिकल्पयेत् ॥ [K 239]

222 दत्त्वादत्ते तथादत्ते स्वामिनां निर्णये सति ।
विक्रीयादानसम्बन्धे क्रीत्वा धनमनिच्छति ॥ [K 227]

223 द्यूते समाह्वये चैव विवादे समुपस्थिते ।
साक्षिणः साधनं प्रोक्तं न दिव्यं न च लेख्यकं ॥[K 228]

224 पूगश्रेणीगणादीनां या स्थितिः परिकल्पिता ।
तस्यास्तु साधनं लेख्यं न दिव्यं न च साक्षिणः ॥ [K 225]

225 द्वारमार्गक्रियाभोगजलवाहादिके तथा ।
भुक्तिरेव तु गुर्वी स्यात् न लेख्यं न च साक्षिणः ॥[K 226]

226 प्रक्रान्ते साहसे वादे पारुष्ये दण्डवाचिके ।
बलोद्भूतेषु कार्येषु साक्षिणो दिव्यमेव वा ॥ [K 229]

[1]दत्त्वादत्त इति - दातुं प्रतिश्रुत्यानर्पिते । [2]तथादत्ते दत्त्वा पुनराच्छिद्य गृहीते । [3]स्वामिनां निर्णये सति एतत्स्वामिकमेतदिति निर्णये सति। [4]दत्त्वादत्तादिविवादे साक्षिणः प्रमाणं न दिव्यं न च लेख्यमिति सम्बन्धः । [5]धनं मूल्यधनं । [6]अनिच्छति दातुमिति शेषः । [7]द्वारमार्गक्रिया द्वारेण जलनिःसरणादिक्रिया द्वारक्रिया मार्गेण गवादीनां निःसरणादिक्रिया मार्गक्रिया । [8]भोगो भोग्यं छत्रादि । [9]जलवाहो जलनिर्गममार्गः । [10]आदिपदादुत्करादिसंग्रहः । [11]एषु भुक्तिर्गुर्वी ।

---

220[1] साक्ष्यादीनामत्र : B1 साक्ष्यादेरत्र । 224 °श्रेणी° : B1B2 श्रेणि । 224 परिकल्पिता : M1 कल्पिता तथा । 225 स्यात् : B2 स्यान् । 226[1] तथादत्ते : B1 तथा अदत्ते । 226[2] दत्त्वा : B1 om । 226[4] सम्बन्धः : B1 समन्वयः । 226[5] मूल्यधनं : M1 मूल्यरूपं ।

[12] पितामहः -

227 यस्मिन् यस्मिन् विवादे तु साक्षिणां नास्ति सम्भवः ।
साहसेषु च सर्वेषु तत्र दिव्यानि दापयेत् ॥ [Pi 29]

[1]साहसेषु प्राणान्तिकदण्डार्हेषु ।

[2]तथा च कात्यायनः -

228 समत्वं साक्षिणां यत्र दिव्यैस्तत्र विशोधयेत् ।
प्राणान्तिकविवादे च विद्यमानेषु साक्षिषु ॥ [K 232abcd]

[1] दृष्टसाम्ये यत्र च मङ्गपक्षे प्राणशास्तिस्तत्र चोभयत्रापि दिव्यमेव कार्यमित्यर्थः ।

[2]नारदः -

229 प्रमाणानि प्रमाणज्ञैः पालनीयानि यत्नतः ।
सीदन्ति हि प्रमाणानि पुरुषस्यापराधतः ॥ [N 1.68]

[1] अपराधः साक्ष्यादीनामस्मरणादिः ।

---

227[1] °दण्डार्हेषु : B2LCM2 दण्डार्हेषु तत्र दिव्यानि दापयेत् । 227[2] तथा च : B2 तथा M1 om । 228 °विवादे च : B2LCM2 विवादेषु । 228[1] च : B1 om ।

(229) [2]अथ प्रायशः साक्षिभिर्व्यवहारसमाप्तेस्ते निरूप्यन्ते ।

[3]तत्र गौतमः -

230 विप्रतिपत्तौ साक्षिनिमित्ता व्यवस्था ॥ [G 13.1]

[1] प्रायेणेति शेषः ।

[2]मनुः -

231 समक्षदर्शनात् साक्षी श्रवणाच्चैव सिध्यति ॥ [M 8.74ab]

[1] समक्षेति प्रमितार्थः साक्षी भवतीत्यर्थः ।

[2]बृहस्पतिः -

232 लिखितो लेखितो गूढः स्मारितः कुल्यदूतकौ ।
याहच्छिकश्चोत्तरश्च कार्यमध्यगतस्तथा ॥ [B 5.4]

233 नृपोऽध्यक्षस्तथा ग्रामः साक्षी द्वादशधा स्मृतः ।
प्रभेदमेषां वक्ष्यामि यथावदनुपूर्वशः ॥ [B 5.5]

234 जातिनामाभिलिखितं येन स्वं पितृनाम च ।
निवासश्च स विज्ञेयः साक्षी लिखितसंज्ञकः ॥ [B 5.6]

235 अर्थिना च क्रियाभेदैस्तस्य कृत्वा ऋणादिकं ।
प्रत्यक्षं लिख्यते यस्तु लेखितः स उदाहृतः ॥ [B 5.7]

236 कुड्यव्यवहितो यश्च श्राव्यते ऋणिभाषितं ।
विनिह्नुते यथाभूतं गूढसाक्षी स कीर्तितः ॥ [B 5.8]

237 आहूय यः कृतः साक्षी ऋणन्यासक्रियादिके ।
स्मार्यते ऽथ मुहुर्यश्च स्मारितः सो ऽभिधीयते ॥ [B 5.9]

238 विभागदाने विपणे ज्ञातिर्यत्रोपदिश्यते ।
द्वयोः समानो धर्मज्ञः कुल्यः स परिकीर्तितः ॥[B 5.10]

239 अर्थिप्रत्यर्थिवचनं शृणुयात् प्रेषितस्तुयः ।
उभयोः सम्मतः साधुर्दूतकः स उदाहृतः ॥ [B 5.11]

240 क्रियमाणे च कर्तव्ये यः कश्चित्स्वयमागतः ।
अत्र साक्षित्वमस्माकमुक्तो याहच्छिकस्तु सः ॥ [B 5.12]

241 यः साक्षी तु दिशं गच्छन् मुमूर्षुर्वा यथाश्रुतं ।

---

232 °गतस्तथा : M1 गतः LCM2 गतः परः । 236 श्राव्यते : B2 शृणोति ।

अन्यं संश्रावयेत्तं तु विद्यादुत्तरसाक्षिणं ॥[B 5.13]

242 साक्षिणामपि यः साक्ष्यमुपर्युपरि भाषतां ।
श्रवणात् श्रावणाद्वापि स साक्ष्युत्तरसंज्ञितः ॥[B 5.14]

243 उभाभ्यां यस्य विश्वस्तं कार्यं वा विनिवेदितं ।
गूढचारी स विज्ञेयः कार्यमध्यगतस्तथा ॥[B 5.15]

244 अर्थिप्रत्यर्थिनोर्वाक्यं यच्छ्रुतं भूभृता स्वयं ।
स एव तत्र साक्षी स्याद्विसंवादे द्वयोरपि ॥ [B 5.16]

245 निर्णीते व्यवहारे तु पुनर्न्यायो यदा भवेत् ।
अध्यक्षः सभ्यसहितः साक्षी स्यात्तत्र नान्यथा ॥ [B 5.17]

246 दूषितं घातितं यत्तु सीमायास्तु समन्ततः ।
अकृतोऽपि भवेत्साक्षी ग्रामस्तत्र न संशयः ॥ [B 5.18]

[1]अत्र साक्षी द्विविधः - द्रष्टा श्रोता च । [2] तत्र द्वावपि षड्विधौ । [3]तत्राद्यो लिखितलेखितस्मारितकुल्ययादृच्छिककार्यमध्यगतभेदात् षोढा। [4] अन्त्योऽपि गूढदूतोत्तरसाक्षिग्रामाध्यक्षराजभेदात् षोढैव । [5] तत्र प्रथमषट्के आद्यस्य लक्षणं - जातीत्यादि । [6] क्रियादर्शी स्वयं लिखितस्वसाक्ष्यो लिखितसाक्षीत्यर्थः । [7] द्वितीयस्य तु - अर्थिनेत्यादि। [8]क्रियादर्शी वणिगादिलिखितो लेखित इत्यर्थः । [9] तृतीयस्य तु - आहूयेत्यादि । [10] क्रियादर्शी तद्बोधितसंस्कारः स्मारित इत्यर्थः । [11] चतुर्थस्य - विभागेत्यादि। [12] क्रियादर्शी धनिकादिसनाभिः कुल्य इत्यर्थः । [13]पंचमस्य तु - क्रियमाणेत्यादि । [14] क्रियादर्शी अतिरस्कृतापुरस्कृतो यादृच्छिक इत्यर्थः। [15]षष्ठस्य तु - उभाभ्यामित्यादि । [16] तत्क्रियाव्यवहारान्तर्गतस्तत्क्रियादर्शी कार्यमध्यगत इत्यर्थः। [17] अत्र विश्वस्तं विश्वासः कृतः । [18] वाकारः समुच्चये । [19] यद्यपि कार्यविनिवेदनात् श्रुतो साक्ष्यसौ तथापि कार्यमध्यगतत्त्वं पुरस्कृत्य द्रष्टृवर्गे गणित इत्यवधेयं । [20] उत्तरषट्के तु प्रथमस्य लक्षणं - कुड्येत्यादि । [21] अभियुक्ताज्ञातः सन्नभियोक्त्रभिहिताभियुक्तवाक्यश्रावी गूढसाक्षीत्यर्थः । [22] द्वितीयस्य तु - अर्थीत्यादि । [23] प्रेषितो निर्णयक्षमवादिवाक्यश्रावी दूत इत्य-

------------------------

242 साक्ष्युत्तर° : B2 स्यादुत्तर । 246[1] द्विविधः : LCM2 द्विविधो । 246[4] अन्त्योऽपि : B1 अन्त्यो । 246[4] °ग्रामाध्यक्षराज° : M1 राजाध्यक्षग्राम । 246[9] तु : B2 om । 246[11] चतुर्थस्य : B1 चतुर्थस्य च। 246[17] कृतः : B1 स कृतः । 246[22] तु : B2 om ।

र्थः । [24] तृतीयस्य तु - य इत्यादिश्लोकद्वयं । [25] साक्षिवचनात्तदर्थनिश्चयवान् उत्तरसाक्षीत्यर्थः। [26] चतुर्थस्य तु - अर्थीत्यादि । [27] भाषोत्तरश्रावी अपरः साक्षीत्यर्थः । [28] अस्य तु भाषाद्यपह्नवे सति पूर्वभाषाद्यभिज्ञतया निर्णायकत्वं । [29] पंचमस्य तु - निर्णीत इत्यादि । [30] पूर्वजयज्ञः पंचमः साक्षीत्यर्थः । [31] षष्ठस्य तु - दूषितं इत्यादि। [32] अभियोगहेतुभूतोपघातद्रष्टा उपहन्तव्यसीमासेत्वादिश्रोता ग्रामादिस्थः षष्ठः साक्षीत्यर्थः ।

[33] प्रजापतिः -

247 साक्षी तु द्विविधो ज्ञेयः कृत एको ऽपरो ऽकृतः ।
लेख्यारूढः कृतो ज्ञेयो मुक्तको ऽकृत उच्यत । इति ॥ [Pr ?]

[1] नारदः -

248 एकादशविधः साक्षी शास्त्रे दृष्टो मनीषिभिः ।
कृतः पंचविधस्तेषां षड्विधो ऽकृत उच्यते ॥ [N 1.149]

249 लिखितः स्मारितश्चैव यदृच्छाभिज्ञ एव च ।
गूढश्चोत्तरसाक्षी च साक्षी पंचविधः स्मृतः ॥[N 1.150]

250 अन्ये पुनरनिर्दिष्टाः साक्षिणः समुदाहृताः ।
ग्रामश्च प्राड्विवाकश्च राजा च व्यवहारिणां ॥ [N 1.151]

251 कार्येष्वभ्यन्तरो यश्च अर्थिना प्रहितश्च यः ।
कुल्याः कुलविवादेषु भवेयुस्ते ऽपि साक्षिणः ॥ [N 1.152]

[1] लिखितस्यैव स्वयं परेण लेखनात् बृहस्पतिना द्वादशसाक्षिण उक्ताः ।

[2] यत्तु -

252 न कार्यो नृपतिः साक्षी न कारुर्न कुशीलव [M 8.65ab]

[1] इति मनुवचनं तद्राज्ञः साक्षित्वकरणनिषेधकं न तु साक्षित्वनिषेधकं । [2] अतो न विरोधः ।

[3] नारदः -

253 सुदीर्घेनापि कालेन लिखितः सिद्धिमाप्नुयात् ।
संजानन्नात्मनो लेख्यमजानन्तं तु लेखयेत् ॥[N 1.167]

---

247 उच्यत इति : B2M1 उच्यते । 252 कुशीलव : B2 कुशीलवः। 252[3] नारदः : B2 om । 253 तु : B2 च ।

[1] सुदीर्घेणेति - संस्कारोद्बोधकलिखनसत्त्वादयं चिरेणापि साक्ष्यं दातुं शक्नोतीत्यर्थः ।
[2] संजानन्निति - लिपिपट्टं साक्षिणां तद्धस्तेनैव लेखयेत् । तदपट्टं तु परहस्तेनेति विशेष इत्यर्थः ।

[3] अथ साक्ष्यार्हाः ।

[4] तत्र मनुः -

254 यादृशा अर्थिभिः कार्या व्यवहारेषु साक्षिणः ।
तादृशान् सम्प्रवक्ष्यामि यथा वाच्यमृतं च तैः ॥ [M 8.61]

255 गृहिणः पुत्रिणो मौलाः क्षत्रविट्शूद्रयोनयः ।
अर्थ्युक्ताः साक्ष्यमर्हन्ति न ये केचिदनापदि ॥ [M 8.62]

256 आप्ताः सर्वेषु वर्णेषु कार्याः कार्येषु साक्षिणः ।
सर्वधर्मविदो ऽलुब्धा विपरीतांस्तु वर्जयेत् ॥ [M 8.63]

[1] ऋतं सत्यं । [2] मौलाः प्रसिद्धकुलोद्भवाः । [3] न ये केचिदिति - गुणवत्साक्ष्यभावे निर्दोषतामात्रेणापि साक्षिणो ग्राह्या इत्यर्थः ।

[4] याज्ञवल्क्यः -

257 तपस्विनो दानशीलाः कुलीनाः सत्यवादिनः ।
धर्मप्रधाना ऋजवः पुत्रवन्तो धनान्विताः ॥ [Y 2.68]

258 त्र्यवराः साक्षिणो ज्ञेयाः श्रौतस्मार्तक्रियान्विताः ।
यथाजाति यथावर्णं सर्वे सर्वेषु वा स्मृताः ॥ [Y 2.69]

[1] यथाजातीति संकीर्णजात्यभिप्रायं, [2] यथावर्णमिति ब्राह्मणादिवर्णानामुपादानात् । [3] यद्वा - यथाजातीति स्त्रीणां स्त्रिय इत्येवमादि । [4] एवं च संख्यागुणादिसाम्ये ऽपि यस्य वादिनः सवर्णाः साक्षिणस्तस्यैव ग्राह्या इति भावः ।

[5] मनुः -

259 स्त्रीणां साक्ष्यं स्त्रियः कुर्युर्द्विजानां सदृशा द्विजाः ।
शूद्राः सन्तश्च शूद्राणां अन्त्यानामन्त्ययोनयः ॥ [M 8.68]

---

253[2] साक्षिणां : CM2 om । 258[4] साक्षिणस् : B2 साक्षिणः । 258[4] इति भावः : B1 इत्यर्थः ।

[1] नारदः -

260 कुलीना ऋजवः शुद्धा जन्मतः कर्मतोऽर्थतः ।
त्र्यवराः साक्षिणो ज्ञेयाः शुचयः शुद्धबुद्धयः ॥ [N 1.153]

261 ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा ये चाप्यनिन्दिताः ।
प्रतिवर्णं भवेयुस्ते सर्वे सर्वेषु वा पुनः ॥ [N 1.154]

[1] त्र्यवराः त्रयोऽवरा येषां ते त्र्यवराः । [2]तेन त्रिभ्य आरभ्य नवपर्यन्ताः साक्षिणः । [3]यदाह बृहस्पतिः -

262 नव सप्त पंच वा स्युश्चत्वारस्त्रय एव वा ।
उभौ तु श्रोत्रियौ ग्राह्यौ नैकं पृच्छेत्कदाचन ॥ [B 5.1]

[1] उभौ त्विति - पूर्वोक्तगुणेषु सत्स्वेव श्रोत्रियौ चेत्तदोभावपि ग्राह्यौ एकस्तु श्रोत्रियोऽपि न ग्राह्य इत्यर्थः । [2] श्रोत्रियाविति - त्र्यवरसाक्ष्यपेक्षयोत्कृष्टगुणावित्यर्थः ।

[3] शङ्खः -

263 एकः साक्षी सर्वथा न ग्राह्यः ॥ [Sl ?]

[1] गुणवतोऽप्यग्रहणमिति सर्वथापदस्यार्थः ।

[2] एतच्चोभयाननुमतविषयं । [3] उभयानुमतस्त्वेकोऽपि निगाद्य एव । [4] तदाह याज्ञवल्क्यः -

264 उभयानुमतः साक्षी भवेदेकोऽपि धर्मविदिति ॥ [Y 2.72ab]

[1] धर्मविदिति सकलसाक्षिगुणोपलक्षणं ।

[2] नारदः -

265 उभयानुमतो यः स्यात् द्वयोर्विवदमानयोः ।
भवत्येकोऽपि साक्षित्वे प्रष्टव्यः स्यात्तु संसदि ॥ [N 1.192]

[1] उभयानुमत इति - उभयानुमतिविषय इत्यर्थः । [2] न तूभयानुमतियोग्यो, [3]लक्षणापत्तेः । [4] तपस्विन इत्यादिना च गुणवतामेव त्र्यवरत्वविधानात् । [5] योग्यतालक्षकत्वे चानुमतिपदमनर्थकमेव स्यात् ,[6] धर्मवित्पदादे-

---

262 स्युश् : M1 स्युः । 262[1] चेत्तदोभावपि : LCM2 चेत्तदा तावपि । 263[3] निगाद्य : B2LCM2 ग्राह्य । 264 धर्मविदिति : B2 धर्मवित् । 264[1] सकल° : B2 सर्व । 265[4] च : LCM2 om । 265[5] °लक्षकत्वे : B1(?)B2 लक्षणकत्वे । 265[5] °पदमनर्थकमेव : LCM2 पदस्यानर्थक्यमेव ।

वानुमतियोग्यस्य प्राप्तत्वादिति । [7] एतदेव व्यक्तमाह विष्णुः -

266.267 अथ साक्षिणः । कुलवृत्तजातिसम्पन्ना यज्वानस्तपस्विनः पुत्रि-
268 णो धर्मज्ञा अधीयानाः सत्यवन्तस्त्रैविद्यवृद्धा अभिमतगुणसम्पन्न-
स्तूभयानुमत एको ऽपि ॥ [Vi 8.1,8,9]

[1] एकस्य साक्षित्वे अभिमतगुणसम्पत्त्युभयानुमती मिलिते तन्त्रं। [2] यत्तु - भिन्ने इमे तन्त्रं । [3] तेन निर्गुणस्यापि सदोषस्याप्युभयानुमतस्यैकस्य साक्ष्यमेवेति । [4] तन्न - [5] एवमर्थभेदाद्वाक्यभेदापत्तेरिति ।

[6] व्यासः -

269 शुचिक्रियश्च धर्मज्ञः साक्षी यत्रानुभूतवाक् ।
प्रमाणमेको ऽपि भवेत् साहसेषु विशेषतः ॥ [Vy 1.90]

[1] अनुभूता वाक् सत्यत्वेन यस्य स तथा ।

[2] कात्यायनः -

270 अभ्यन्तरस्तु निक्षेपे साक्ष्यमेको ऽपि वाच्यते ।
अर्थिना प्रहितः साक्षी भवेदेको ऽपि याचिते ॥ [K 353]

[1] याचित इति निक्षेपविशेषणं । [2] न्यायतौल्यादन्यत्रापि ।

[3] तथा -

271 संस्कृतं येन यत्पण्यं तत्तेनैव विभावयेत् ।
एक एव प्रमाणं स विवादे परिकीर्तितः ॥ [K 354]

[1] संस्कृतं घटितं । [2] पण्यं कुण्डलादि । [3] एतच्च तादृशस्यान्यस्याभावे तस्य च स्तेयत्वपक्षे द्रष्टव्यं ।

[4] मनुः -

272 एको ऽप्यलुब्धः साक्षी स्यात् बह्व्यः शुच्यो ऽपि न स्त्रियः ।
स्त्रीबुद्धेरस्थिरत्वात्तु दोषैरन्यैश्च ये वृताः ॥ [M 8.77]

[1] प्रमाणसिद्धे तु लुब्धत्वे उभयानुमतो ऽपि साक्षी न ग्राह्यः । [2] लुब्धत्वं तु दोषमात्रोपलक्षणं ।

---

$268^{2-5}$ यत्तु ... वाक्यभेदापत्तेरिति : LCM2 om । $268^{5}$ °पत्तेरिति : B2 पत्तेः । 270 अभ्यन्तरस्तु : B1 अभ्यन्तरश्च । $272^{1}$ तु लुब्धत्वे : M1 तल्लुब्धत्वे ।

[3] अथ साक्ष्यानर्हाः ।

[4] तत्र नारदः -

273 असाक्ष्यपि हि शास्त्रेषु दृष्टः पंचविधो बुधैः ।
वचनाद्दोषतो भेदात्स्वयमुक्तिर्मृतान्तरः ॥ [N 1.157]

274 श्रोत्रियाद्या वचनतः स्तेनाद्या दोषदर्शनात् ।
भेदाद्विप्रतिपत्तिः स्याद्विवादे यत्र साक्षिणां ॥[N 1.157°]

275 राज्ञा परिगृहीतेषु साक्षिष्वेकार्थनिर्णये ।
वचनं यत्र भिद्येत ते स्युर्भेदादसाक्षिणः ॥ [N 1.160]

[1] अस्यार्थः - एकस्य भाषार्थस्य उत्तरार्थस्य वा निर्णयार्थं गृहीतानां साक्षिणां वचनभेदादसाक्षित्वमिति ।[2] एतच्च साक्षिणां सर्वथांतोऽन्यवचनभेदे बोद्धव्यं । [3] अन्यथा तु -

276 बहुत्वं परिगृह्णीयात् साक्षिद्वैधे नराधिपः ।
समेषु च गुणोत्कृष्टान् गुणिद्वैधे द्विजोत्तमानिति [M 8.73]

[1] मनुवचनादेव व्यवस्था । [2]न चेदं साक्ष्युपादानमात्रपरं ,[3] परिगृह्णीयादिति वचनात् ।[4] न तु तद्वचनप्रामाण्यपरमिति वाच्यं, [5]परिग्रहानर्थक्यापत्तेः ।[6] नापि वादिनोरेव साक्षिद्वैधे सतीदं,[7]एकस्यापि वादिनः साक्षिभेदे ऽस्य संकोचेन जागरूकत्वात् ।

[8] याज्ञवल्क्योऽप्याह -

277 द्वैधे बहूनां वचनं समेषु गुणिनां तथा ।
गुणिद्वैधे तु वचनं ग्राह्यं ये गुणवत्तराः ॥ [Y 2.78]

[1] न चेदं वचनपदं मन्वनुरोधात् परिग्रहपरं, [2] निर्बीजलक्षणापत्तेः ।

[3] अथ -

278 साक्षिणां लिखितानां च निर्दिष्टानां च वादिनां ।
तेषामेकोऽन्यथावादी भेदात् सर्वे ऽप्यसाक्षिणः [K 359]

[1] इति कात्यायनवचनेन एकस्याप्यन्यथावादे सर्वेषामसाक्षित्वमुच्यत इति विरोध इति चेत्। [2]न - [3]त्रयाणां साक्षिणां मध्ये एकस्यान्यथावादे

---

273[4] तत्र : CM2 अत्राह । 275[1] एकस्य : L एक । 275[2] बोद्धव्यं : B2 द्रष्टव्यं । 276[2] चेदं : LCM2 चैवं । 278 लिखितानां च : M1 लिखितानां वा ।

ऽपरस्य तत्तुल्यस्य सत्प्रतिपक्षिततया तृतीयस्य चैकतया तत्र साक्षितो न निर्णीयत इत्यत्र कात्यायनतात्पर्यात्। [4] सत्प्रतिपक्षितावशिष्टानां त्व-नेकत्वे तत एव निर्णय इत्यत्र याज्ञवल्क्यतात्पर्यादिति [5]कात्यायनवचनस्य चास्य स्वमूलभूतन्यायविरोधेनारम्य संकोच्यत्वादिति ।

[6]स्वयमुक्तिं व्याकरोति नारदः -

279 स्वयमुक्तिरनिर्दिष्टः स्वयमेवेत्य यो वदेत् ॥ [N 1.157''ab]

[1]कात्यायनो ऽपि -

280 यः साक्षी नैव निर्दिष्टो नाहूतो नैव देशितः ।
ब्रूयान्मिथ्येति तथ्यं वा दण्ड्यः सो ऽपि नराधमः ॥ [K 404]

[1]मृतान्तरं विविनक्ति नारदः -

281 मृतान्तरो ऽर्थिनि प्रेते मुमूर्षुश्राविताहृते ॥ [N 1.157''cd]

[1]अर्थी धनिकः । [2] मुमूर्षुणा धनिकेन यः साक्षी स्वदायादेभ्यो ऽयमि-यद्धनं मह्यं धारयत्ययं तु जानातीति श्रावितः स मृतान्तरो ऽपि साक्षी भवत्येवेत्यर्थः ।

[3]मृतान्तरस्य त्वसाक्षित्वे हेतुमाह स एव -

282 यो ऽर्थः श्रावयितव्यः स्यात्तस्मिन्नसति चार्थिनि ।
क्व तदुत्तरसाक्षित्वमित्यसाक्षी मृतान्तरः ॥ [N 1.162]

[1]अर्थिना साक्षिणि यो ऽर्थो विवादास्पदीभूतः श्रावयितव्यः त्वमि-ममर्थं जानीहीति तस्मिन् श्रावयितव्ये ऽर्थे श्रावयितरि अर्थिनि असति अश्रुतत्वादर्थविशेषस्य क्वार्थे साक्षी साक्षित्वं वदत इति हेतोर्मृतान्तरो न साक्षीत्यर्थः ।

[2]तेनैतदुक्तं भवति - [3]यस्मिन्नर्थे ऽर्थिनि प्रेते अर्थिपुत्रस्य न विशेषज्ञानं

---

278[3] ऽपरस्य : B1 अपरस्य। 278[3] तत्तुल्यस्य : LCM2 om । 278[3] °प्रतिप-क्षित° : B2 प्रतिपक्षि M1 प्रतिपक्ष। 278[3] इत्यत्र : B2 इति। 278[3] का-त्यायन° : B1 कात्यायनवचन । 278[4] °प्रतिपक्षिता° : M1 प्रतिपक्षता । 278[4] °तात्पर्याद् :LCM2 तात्पर्यात्। 278[5] °वचनस्य चास्य: M1 वचनस्यास्य। 280 देशितः : LCM2 दर्शितः। 281 मृतान्तरो : M1 मृतान्तरे । 282[1] सा-क्षिणि : B2 साक्षिणो। 282[1] श्रावयितरि अर्थिनि असति : B2 श्रावयि-तर्यर्थिन्यसति । 282[1] वदत : B1B2 वदतु । 282[2] उक्तं : LCM2 व्यक्तं ।

तत्र साक्षिणः तत्सत्त्वे ऽपि न साक्षित्वं सविशेषमनुपन्यासात् सा-
मान्योपन्यस्तस्यापि तस्य साक्षिणो न संख्यादौ विशेषे साक्षित्वं
स्वयमुक्तित्वापत्तेः । [4] किंतूभयोरर्थिसाक्षिणोरुपयुक्ताशेषज्ञतायामेव
मृतान्तरः साक्षीति भावः ।

[5] श्रोत्रियादीन् व्याकरोति स एव -

283 श्रोत्रियास्तापसा वृद्धा ये च प्रव्रजिता नराः ।
असाक्षिणस्ते वचनात् नात्र हेतुरुदाहृतः ॥[N 1.158]

[1] वचनादिति - तेषां साक्षित्वकरणनिषेधकवचनात् । [2] तथा च ते पू-
ज्यतमतया तपश्चर्याव्यासक्तत्वेन विवादपदविस्मरणशीलतया न साक्षि-
णः कार्याः । [3] अकृतास्तु तत्त्वं जानन्तो भवन्त्येव साक्षिणः । [4] त-
दुक्तं - [5] उभौ तु श्रोत्रियौ ग्राह्याविति । [6] नात्र हेतुरिति - नात्रोक्ता-
न्यहेतुरित्यर्थः ।

[7] दोषादसाक्षिणो दर्शयति नारदः -

284 स्तेनाः साहसिकाश्चण्डाः कितवा व्याधकास्तथा ।
असाक्षिणस्ते दुष्टत्वात्तेषु सत्यं न विद्यते ॥[N 1.159]

[1] मनुः -

285 नार्थसम्बन्धिनो नाप्ता न सहाया न वैरिणः ।
न दृष्टदोषाः कर्तव्या न व्याध्यार्ता न दूषिताः ॥[M 8.64]

[1] अर्थसम्बन्धी जयफलभागी । [2] आप्तः सहायो रिपुश्च यो यस्य ।

[3] नारदः -

286 दासनैकृतिकाश्रद्धवृद्धस्त्रीबालचाक्रिकाः ।
मत्तोन्मत्तप्रमत्तार्तकितवा ग्रामयाजकाः ॥[N 1.178]

287 महापथिकसामुद्रवणिक्प्रव्रजितातुराः ।
व्यङ्गैकश्रोत्रियाचारहीनक्लीबकुशीलवाः ॥[N 1.179]

288 नास्तिकव्रात्यदाराग्नित्यागिनो ऽयाज्ययाजकाः ।

---

283 वचनात् : B2LCM2 वचनान् । 283[1] °निषेधक° : B1B2 निषेधकाद् । 283[6] °व्यासक्तत्वेन : M1 व्यासक्तत्वेन च। 283[6] नात्रोक्तान्य° : B2 नात्रोक्तोऽन्यो। 285 कर्तव्या : B1 कर्तव्याः। 285[1] °सम्बन्धी : B2 सम्बन्धिनो । 285[1] भागी :B2 भागिनः। 286 °प्रमत्तार्त° : LCM2 प्रमत्ताश्च ।

एकस्थालीसहायारिचरज्ञातिसनामय: ॥[N 1.180]

289 प्राग्दृष्टदोषशैलूषविषजीव्याहितुण्डिका: ।
गरदाग्निदकीनाशशूद्रापुत्रोपपातिता: ॥[N 1.181]

290 क्लान्तसाहसिकाश्रान्तनिर्धूताग्न्यवसायिन: ।
भिन्नवृत्तासमावृत्तजलतैलिकमूलिका: ॥ [N 1.182]

291 भूताविष्टनृपद्विष्टवर्षनदात्रसूचका: ।
अघशंस्यात्मविक्रेतृहीनाङ्गभगवृत्तय: ॥ [N 1.183]

292 कुनखिश्यावदच्छ्विवित्रिमित्रध्रुक्शठशौण्डिका: ।
ऐन्द्रजालिकलुब्धोग्रश्रेणिगणविरोधिन: ॥[N 1.184]

293 वधकश्चित्रकृच्छुङ्ख: पतित: कूटकारक: ।
कुहक: प्रत्यवसितस्तस्करो राजपूरुष: ॥[N 1.185]

294 मनुष्यपशुमांसास्थिमधुक्षीराम्बुसर्पिषां ।
विक्रता ब्राह्मणश्चैव द्विजो वार्द्धुषिकश्च य: ॥[N 1.186]

295 च्युत: स्वधर्मात् कुलिक: सूचको हीनसेवक: ।
पित्रा विवदमानश्च भेदकश्चेत्यसाक्षिण: ॥[N 1.187]

296 श्रेण्यादिषु च वर्गेषु कश्चिच्चेद् द्वेष्यतामियात् ।
तस्य तेभ्यो न साक्ष्यं स्यात् द्वेष्टार: सर्व एव ते ॥[N 1.156]

[1]नैकृतिका वंचका: । [2]अश्रद्ध: श्रद्धाहीन: । [3]वृद्धो ग्लानेन्द्रिय: । [4]स्त्री पुंसां न साक्षिणी । [5]बालो ऽजातविवेक: ।
[6]महापथिको दीर्घाध्वगामी । [7]आतुरो तिरोगपीडित: । [8]एक: श्रोत्रिय: द्वयो: श्रोत्रिययोर्विहितत्वात् सो ऽप्यननुमत: ।[9]क्लीबं नपुंसकं ।
[10]कुशीलवो रङ्गोपजीवी ।
[11]एकस्थालीसहाय एकपाकभोजी। [12]अरिचरो वादिशत्रुचारी। [13]सनामयस्तु -

297 मातृष्वसृसुताश्चैव सोदर्यसुतमातुला: ।
एते सनामयस्तूक्ता: साक्ष्यं तेषु न विद्यत [K 362]

[1]इति कात्यायनोक्ता: ।
[2]शैलूषो नटभिन्नरङ्गोपजीवी विवक्षित:। [3]विषजीवी विषवैद्य: ।
[4]आहितुण्डिक: सर्पक्रीडोपजीवी व्यालग्राही । [5]गरदाग्निदो परानि-

---

291 °वृत्तय: : B1 विक्रय:। 296 वर्गेषु : B1 सर्वेषु । 296 स्यात् : B2L स्याद् । 296[5] जात° : B1LCM2 अजात । 296[7] ऽतिरोग° : B1LCM2 अतिरोग ।297 विद्यत : B2M2 विद्यते । 297[5] °निष्टार्थं : B2 निष्टाथ ।

ष्ठार्धं विषाग्निप्रयोक्तारौ । [6]कीनाशो हालिकः ।[7] उपपातित उपपातकाक्रान्तः ।
[8] क्लान्तो ऽतिखिन्नः । [9] अश्रान्तो ऽयोग्यकारी । [10] निर्धूतः ग्रामराजकुलश्रेण्यादिभिर्निःसारितः । [11] लोकभयशून्य इति कश्चित् । [12] अग्न्यवसायी क्रोधादिना संस्कृताग्निनिर्वापकः । [13] भिन्नवृत्तः स्वकर्मत्यागी । [14]असमावृत्तः अकृतसमावर्तनः । [15] तैलिकः तिलविक्रयी । [16] मूलिकः मूलं विप्रलम्भस्तत्कारी ।
[17] अघशंसी पराभिशापशीलः । [18] हीनाङ्गः प्रकृतपरिमाणान्यूनाङ्गः।
[19] शङ्खः वृषभनाटनेन भिक्षाटनशीलः । [20] प्रत्यवसितस्त्यक्तप्रव्रज्यः ।
[21] कुलिकः परिच्छेदकत्वेन नियुक्तः ।

[22] सर्वे चैते मन्दाभिधायिनो लोभादिशङ्कनात् । [23] तथा च मनुः -

298 लोभान्मोहाद् भयान्मैत्रात्कामात्क्रोधात्तथैव च ।
अज्ञानाद् बालभावाच्च साक्ष्यं वितथमुच्यते ॥ [M 8.118]

[1] अत्र यद्यपि साक्षिणां विशेषविधिनैव शेषप्रतिषेध इति कण्ठतो निषेधो ऽनर्थकः तथापि विहितालाभ ऽप्यमीषामनुपादानाय माँदृगश्च--रु.भैवतीत्युक्ते ऽप्ययज्ञिया वै माषा इतिवत् । [2]तथा च विहितालाभे अविहितानिषिद्धाः साक्षिणो ग्राह्याः कण्ठतो निषिद्धास्तु सर्वथा न ग्राह्या इत्याशयः ।

[3] एतच्च साक्षिपरीक्षणमृणादिषु न तु साहसादिषु । [4] यदाह कात्यायनः -

299 ऋणादिषु परीक्षेत साक्षिणः स्थिरकर्मसु ।
साहसात्ययिके चापि न परीक्षा क्वचिन्मता ॥[K 365]

[1]तथा -

300 व्याघाते च नृपाज्ञायां संग्रहे साहसेषु च ।
स्तेयपारुष्ययोश्चैव न परीक्षेत साक्षिणः ॥[K 366]

---

297[5] °प्रयोक्तारौ : B2 दातारौ । 297[7] उपपातित : B2CM2 उपपातितः । 297[8] ऽतिखिन्नः : B1 अतिखिन्नः । 297[9] ऽयोग्य° : B1M1 अयोग्य । 297[9] °कारी : B1 कर्मकारी । 297[10] °श्रेण्यादिभिर्निःसारितः : B1M1 श्रेण्यादिभिः निःसारितः । 297[11] कश्चित् : B1 केचित् । 300 तथा : B2 तथा च । 300 व्याघाते च : CM2 व्याघाते तु ।

[1] संग्रह: सम्यग्ग्रहणं परस्त्रियै कामुकतया ताम्बूलप्रेषणादि ।

301 अन्तर्वेश्मनि रात्रौ च बहिर्ग्रामाच्च यो भवेत् ।
एतेष्वेवाभियोगेषु परीक्षा नात्र साक्षिणां ॥[K 367]

[1] मनुः -

302 साहसेषु च सर्वेषु स्तेयसंग्रहणेषु च ।
वाग्दण्डयोश्च पारुष्ये न परीक्षेत साक्षिणः ॥[M 8.72]

[1] उशनाः -

303 दासोऽन्धो वधिरः कुष्ठी स्त्रीबालस्थविरादयः ।
एतेऽप्यनभिसम्बद्धाः साहसे साक्षिणो मताः ॥[U ?]

[1] स्तेयसंग्रहणादिकार्याणां निह्नवेनैव क्रियमाणत्वात् दैवगत्यैव परं साक्षिणो भवन्तीति मत्वा नैते परीक्षणीयाः ।[2] अनभिसम्बद्धाः प्रकृतापराधजयाद्यसम्बद्धाः ।

[3] तत्रापि केचिद्वर्जनीया एव ।[4] यदाह कात्यायनः -

304 कार्यगौरवमासाद्य भवेयुस्तेऽपि साक्षिणः ॥[N 1.188cd]

305 तेषामपि न बालः स्यात् नैको न स्त्री न कूटकृत् ।
न बान्धवो न चारातिर्ब्रूयुस्ते साक्ष्यमन्यथा ॥[N 1.190]

306 बालोऽज्ञानादसत्यात् स्त्री पापाभ्यासाच्च कूटकृत् ।
विब्रूयाद् बान्धवः स्नेहाद्वैरनिर्यातनादरिः ॥[N 1.191]

[1] एको यथोक्तगुणहीन उभयाननुमतः ।
[2] न चात्र स्त्र्यादीनां विधेर्निषेधाच्च विरोधः,[3] तद्विधेः साक्ष्यन्तराभावविषयत्वात् ।[4] तदाह मनुः -

307 स्त्रियाप्यसम्भवे कार्यं बालेन स्थविरेण वा ।
शिष्येण बन्धुना वाथ दासेन भृतकेन वेति ॥ [M 8.70]

[1] साक्षिणः सत्स्वेव दूषणेषु दूष्याः ।[2] यदाह बृहस्पतिः -

---

300[1] °प्रेषणादि : B1 प्रेषणादिभिः । 301 °भियोगेषु : B1 भियोगे तु । 301 नात्र : B2 नास्ति । 303[3] तत्रापि : M1 अत्रापि । 305 स्यात् : LCM2 स्यान् । 305 ब्रूयुस्ते साक्ष्यमन्यथा : B2 तेषां साक्षित्वमन्यथा । 306 स्नेहाद् : B1B2 स्नेहात् । 306[3] °विषयत्वात् : M1 विषयकत्वात् । 307 वेति : B2 वा ।

308 साक्षिणोऽर्थिसमुद्दिष्टान् सत्सु दोषेषु दूषयेत् ।
अदुष्टं दूषयन् वादी तत्समं दण्डमर्हति ॥[B 5.21]

[1] तत्समं विवादविषयसमं ।

[2] साक्षिणां च दूषणं समासदामन्येषां च सर्वेषां विदितं ग्राह्यं न तु तदपि त्र्यवरादिसाक्षिभिः प्रतिषेध्यं[3] अनवस्थापातात् । [4] यदाह नारदः -

309 समासदां प्रसिद्धं यत् लोकसिद्धमथापि वा ।
साक्षिणां दूषणं ग्राह्यं असाध्यं दोषवर्जनात् ॥[N ?]

310 अन्यैश्च साक्षिभिः साध्ये दूषणे पूर्वसाक्षिणां ।
अनवस्था भवेद्दोषस्तेषामप्यन्यसम्भवात् ॥[N ?]

[1] असाध्यं साधनानर्हं सिद्धत्वात् । [2] दोषवर्जनात् अनवस्थाविरहात् ।

[3] बृहस्पतिः -

311 लेख्यं वा साक्षिणो वापि विवादे यस्य दूषिताः ।
तस्य कार्यं न सिध्येत यावत्तन्न विशोधयेत् ॥[B 5.29]

[1] तल्लेख्यं साक्षिणश्च प्रमाणमिति यावत् ।

[2] तथा -

312 साक्षिभिर्गदिते साक्ष्ये प्रक्रान्ते कार्यनिर्णये ।
पुनर्विवादं कुरुते तस्य राजा विचारयेत् ॥[B 5.30]

[1] अयं कूटसाक्षीत्यभिधाय यः पुनर्वादी वादं कुरुते तद्राजा विचारयेदित्यर्थः ।

[2] कात्यायनः -

313 नातथ्येन प्रमाणं तु दोषेणैव तु दूषयेत् ।
मिथ्याभियोगे दण्ड्यः स्यात् साध्यादर्थाच्च हीयते ॥[K 278=380]

314 प्रमाणस्य हि ये दोषा वक्तव्यास्तेऽपि वादिना ।
गूढास्तु प्रकटाः सभ्यैः काले शास्त्रप्रदर्शनात् ॥[K 275]

[1] वादिना ज्ञानाभावादनुद्भाविता दोषाः सभ्यैः शास्त्रप्रदर्शनेन प्रकटी-

---

308[2] सर्वेषां : B2 om । 308[2] °साक्षि° : B2 om । 309 यत् : B2LC M2 यल् । 310[2] °वर्जनात् : B2 वर्जनाद् । 310[2] अनवस्था° : LCM2 अनवस्थादोष । 311[2] तथा : M1 om ।

कृत्य सर्वे वक्तव्या इत्यर्थः ।

[1] अथ साक्षिणो यथा प्रष्टव्यास्तदुच्यते ।

[2] तत्र कात्यायनः -

315 न कालहरणं कार्यं राज्ञा साक्षिप्रभाषणे ।
महान् दोषो भवेत्कालात् धर्मव्यावृत्तिलक्षणः ॥[K 339]

[1] नारदः -

316 आहूय साक्षिणः पृच्छेन्नियम्य शपथैर्भृशं ।
समस्तान् विदिताचारान् विज्ञातार्थान् पृथक् पृथक् ॥[N 1.198]

[1] ननु पृथक् पृथक् कथं प्रश्नः -

317 नासमवेताः प्रष्टव्याः प्रब्रूयुरिति [G 13.6]

[1] गौतमवचनात्। [2] न - [3] कात्यायनेन विरोधस्य परिहृतत्वात्। [4] यदाह -

318 समवेतैस्तु यद्दृष्टं वक्तव्यं तु तथैव तत् ।
विभिन्नैस्तु कृतं कार्यं तद्वक्तव्यं पृथक् पृथक् ॥ [K 394]

319 भिन्नकाले तु यत्कार्यं विज्ञातं तत्र साक्षिभिः ।
एकैकं वादयेत्तत्र भिन्नकाले तु तद् भृगुः ॥ [K 395]

[1] मिलितैरेवावगते कार्ये मिलिता एव प्रष्टव्याः । [2] एकैकशस्तु तत्कार्यविगतो पृथक् पृथगित्यविरोधः ।

[3] कात्यायनः -

320 अर्थिप्रत्यर्थिसांनिध्ये साध्यार्थस्य च संनिधौ ।
प्रत्यक्षं वादयेत् साक्ष्यं परोक्षं न कथंचन ॥ [K 388]

321 अर्थस्योपरि वक्तव्यं तयोरपि विना क्वचित् ।
चतुष्पदेष्वयं धर्मो द्विपदस्थावरेष्वपि ॥ [K 389]

322 तुल्यगणिममेयानामभावे ऽपि हि वादयेत् ।
क्रियाकारेषु सर्वेषु साक्षित्वं न ततो ऽन्यथा ॥[K 390]

---

315 कालात् : LCM2 कालाद् । 316 पृच्छेन् : M1 पृच्छेत् । 318 तु तथैव तत् : B1B2 तत्तथैव च । 319[1] मिलितैरेवावगते : LCM2 मिलितैरवगते। 321 चतुष्पदे : M1 चतुष्पादे । 321 द्विपद° : M1 द्विपाद LCM2 द्विपदे ।

[1] वादिप्रतिवादिवस्तूनां संनिधौ साक्षिवादनं कार्यमिति मुख्यः कल्पः । [2] वस्तुमात्रसंनिधौ वादिसंनिधापनाशक्यत्वे सति कार्यमित्यवरः कल्पः । [3] अयं च नियमश्चतुष्पदादिष्वेव । [4] हिरण्यादिषु तु वस्त्वसंनिधावपि साक्षिवादनं ।

[5] तत्र तुल्यं तुलापरिच्छेद्यं हिरण्यादि । [6] गणिमं कपर्दकादि । [7] मेयं मातव्यं धान्यादि । [8] क्रियाकारो व्यवहारः । [9] तेन सर्वेषु व्यवहारेषु एषैव रीतिरित्यर्थः ।

[10] मनुः –

323 देवब्राह्मणसांनिध्ये साक्ष्यं पृच्छेदृतं द्विजान् ।
प्राङ्मुखोदङ्मुखान् वापि पूर्वाह्णे तु शुचिः शुचीन् ॥ [M 8.87]

324 समान्तः साक्षिणः सर्वानर्थिप्रत्यर्थिसंनिधौ ।
प्राड्विवाको ऽनुयुंजीयात् विधिनानेन शान्त्वयन् ॥ [M 8.79]

325 यद् द्वयोरनयोर्वेत्थ कार्ये ऽस्मिंश्चेष्टितं मिथः ।
ब्रूत सर्वमशेषेण युष्माकं ह्यत्र साक्षिता ॥ [M 8.80]

326 सत्यं साक्षी ब्रुवन् साक्ष्ये लोकानाप्नोति पुष्कलान् ।
इह चानुत्तमां कीर्तिं वागेषा ब्रह्मनिर्मिता ॥ [M 8.81]

327 साक्ष्ये ऽनृतं वदन् साक्षी पाशैर्बध्येत वारुणैः ।
विवशः शतमा जातीस्तस्मात् साक्षीवदेदृतं ॥ [M 8.82]

328 सत्येन पूयते साक्षी धर्मः सत्येन वर्धते ।
तस्मात् सत्यं हि वक्तव्यं सर्ववर्णेषु साक्षिभिः ॥ [M 8.83]

329 आत्मैव ह्यात्मनः साक्षी गतिरात्मा तथात्मनः ।
मावमंस्थास्त्वमात्मानं नृणां साक्षित्वमुत्तमं ॥ [M 8.84]

330 मन्यन्ते वै पापकृतो न कश्चित्पश्यतीह नः ।
तांस्तु देवाः प्रपश्यन्ति स्वश्चैवान्तरपूरुषः ॥ [M 8.85]

331 द्यौर्भूमिरापो हृदयं चन्द्रार्काग्नियमानिलाः ।
रात्रिः संध्ये च धर्मश्च वृत्तज्ञाः सर्वदेहिनां ॥ [M 8.86]

---

322[1] संनिधौ : B2 सान्निध्ये । 322[1] मुख्यः : B2 मुख्य । 322[3] °पदा° : B1B2 पादा । 322[4] तु : B2LCM2 om । 322[5] तत्र : B2 om । 322[9] व्यवहारेषु एषैव : B2 व्यवहारेष्वेषैव । 322[9] रीतिरित्यर्थः : LCM2 रीतिः । 324 समान्तः : LCM2 ज्ञानिनः । 324 शान्त्वयन् : LCM2 सान्त्वयन् । 330 स्वश्चैवा° : B2 स्वस्यैवा ।

[1] शतमा जातीः शतं जन्मनानि ।

[2] याज्ञवल्क्यः -

332 साक्षिणः श्रावयेद्वादिप्रतिवादिसमीपगान् ।
ये पातककृतां लोका उपपातकिनां तथा ॥ [Y 2.73]

333 अग्निदानां तु ये लोका ये च स्त्रीबालघातिनां ।
तान् सर्वान् समवाप्नोति यः साक्ष्यमनृतं वदेत् ॥[Y 2.74]

[1] बृहस्पतिः -

334 सत्यप्रशंसावचनैरनृतस्यापवर्जनैः ।
सभ्यैः सम्बोधनीयाश्च धर्मशास्त्रप्रवेदिभिः ॥ [B 5.32]

335 आ जन्मनश्चा मरणात् सुकृतं यदुपार्जितं ।
तत्सर्वं नाशमायाति अनृतस्याभिशंसनात् ॥ [B 5.33]

336 कूटसभ्यः कूटसाक्षी ब्रह्महा च समाः स्मृताः ।
भ्रूणहा वृत्तहा तेषां नाधिकः समुदाहृतः ॥ [B 5.34]

337 एवं विदित्वा तत्साक्षी यथाभूतं वदेद्वचः ।
तेनेह कीर्तिमाप्नोति परत्र च शुभां गतिं ॥[B 5.35]

[1] साक्षिश्रावणे विष्णुनारदौ -

338 अश्वमेधसहस्रं च सत्यं च तुलया धृतं ।
अश्वमेधसहस्राद्धि सत्यमेवातिरिच्यते ॥ [Vi 8.36 = N 1.211]

[1] नारदः -

339 पौराणैर्धर्मवचनैः सत्यमाहात्म्यदर्शनैः ।
अनृतस्यापवादैश्च भृशमुत्त्रासयेदपि ॥[N 1.200]

340 नग्नस्तु प्रतिरुद्धः सन् बहिर्द्वारि बुभुक्षितः ।
अमित्रान् बहुशः पश्येद्यः साक्ष्यमनृतं वदेत् ॥[N 1.201]

341 यां रात्रिमधिविन्ना स्त्री यां चैवाक्षापराजितः ।
यां च भाराभितप्ताङ्गो दुर्विवक्ता स तां वसेत् ॥[N 1.203]

342 साक्षी साक्ष्यसमुद्देशे गोकर्णशिथिलश्चरन् ।
सहस्रं वारुणान् पाशानात्मनि प्रतिमुंचति ॥ [N 1.204]

---

333 तु : B2 च । 336 वृत्त° : B2 वित्त । 336 तेषां : B2 चैषां ।
338 °सहस्रं च : B2 सहस्रं तु । 342 °शिथिलश्चरन् : B1B2 शिथिलं चरन् ।

343 तस्य वर्षशते पूर्णे पाश एक: प्रमुच्यते ।
एवं स बन्धनात्तस्मात् मुच्यते नियतं क्रमात् ॥ [N 1.205]
344 एकमेवाद्वितीयं यत् प्राहु: पावनमात्मन: ।
सत्यं स्वर्गस्य सोपानं पारावारस्य नौरिव ॥ [N 1.210]
345 वरं कूपशताद्वापी वरं वापीशताद् व्रतं ।
वरं व्रतशतात्पुत्र: सत्यं पुत्रशताद्वरं ॥ [N 1.212]
346 भूर्धारयति सत्येन सत्येनोदेति भास्कर: ।
सत्येन वायु: पवते सत्येनाप: स्रवन्ति च ॥ [N 1.213]
347 सत्यमेव परं धाम सत्यमेव परं तप: ।
सत्यमेव परो धर्मो लोकानामिति निश्चितं ॥ [N 1.214]
348 सत्यं देवा: समासेन मनुष्यास्त्वनृतं स्मृतं ।
इहैव तस्य देवत्वं यस्य सत्ये स्थिता मति: ॥ [N 1.215]
349 नास्ति सत्यात्परो धर्मो नानृतात्पातकं परं ।
साक्षिधर्मे विशेषेण सत्यमेव वदेत्तत: ॥ [N 1.226]
350 पुराणानुमतौ चात्र द्वौ श्लोकौ समुदाहृतौ ।
यौ श्रुत्वा सत्यमेवेह सदा वाच्यं नरैर्बुधै: ॥ [N ?]
351 य: परार्थेऽपहरते स्वां वाचं पुरुषाधम: ।
आत्मार्थे किं न कुर्यात्स पापं नरकनिर्भय: ॥ [N 1.227]
352 अर्था वै वाचि नियता वाङ्मूला वाग्विनि:सृता: ।
यस्तु तां स्तेनयेद्वाचं स सर्वस्तेयकृन्नर: ॥ [N 1.228]

[1] अधिविन्ना प्रत्यग्रसपत्नीका । [2] गोकर्णशिथिलश्चरन् व्यवहरन् दृढमब्रुवन्नित्यर्थ: ।

[3] बौधायन: -

353 त्रीनेव च पितॄन् हन्ति त्रीनेव च पितामहान् ।[Bau 1.19.13]
354 सप्त जातानजातांश्च साक्षी साक्ष्यं मृषा वदन् ॥[Bau 1.19.14]

[1] आत्मना सह जातानां सप्तत्वं ।

---

343 तस्मात् : B2LCM2 तस्मान् । 345 व्रतं : B1B2 ह्रद: । 345 व्रतशतात् : B1 शतह्रदात् B2 ह्रदशतात् । 346 प्रवन्ति : M1 प्लवन्ति । 349 परं : B1B2 महत् । 350 नरैर्बुधै: : M1 बुधैर्नरै: । 351 कुर्यात्स : B2 कुर्यात्तु । 352[1] प्रत्यग्र° : B2 प्रत्यक्ष । 352[2] दृढ° : B2 कृत । 354 जातानां : LC M2 जातीनां । 354[1] सप्तत्वं : LCM2 सप्तत्वं परिकीर्तितं ।

355 पंच पश्वनृते हन्ति दश हन्ति गवानृते ।
शतमश्वानृते हन्ति सहस्रं पुरुषानृते ।
हन्ति जातानजातांश्च हिरण्यार्थेऽनृतं वदन् ।
सर्वं भूम्यनृते हन्ति साक्ष्यं साक्षी मृषा वदन् ॥[Bau 1.19.15]

[1]अथ साक्षिशपथाः ।

[2]शङ्खलिखितौ -

356 साक्षिणः सुवर्णरजतगोधान्यसूर्याग्निगजस्कन्धाश्वपृष्ठरथोपस्थ-
357 शस्त्रादिभिः तथा पुत्रपौत्रैर्यथावर्णं परिग्रहविशेषः स्याद्देवब्राह्मणस्वामिनामग्रतः ॥ [SL ?]

[1]सुवर्णेति - सुवर्णादिस्पर्शनेन शापयेदित्यर्थः । [2] तथा पुत्रपौत्रैरिति - पुत्रपौत्रशिरःस्पर्शनेन स्वल्पेऽर्थे शापयेदित्यर्थः । [3] यथावर्णं यस्य वर्णस्य यद्द्रव्यस्पर्शनेन शपथ आम्नातः स्मृत्यन्तरे स तेनैव कारयितव्य इत्यर्थः ।

[4]नारदः -

358 सत्येन श्रावयेद्विप्रं क्षत्रियं वाहनायुधैः ।
गोबीजकांचनैर्वैश्यं शूद्रं सर्वैस्तु पातकैः ॥ [N 1.199]

[1]श्रावयेत् शापयेदित्यर्थः । [2]विप्रमित्यपकृष्टब्राह्मणविषयं, [3]उत्कृष्टे गौतमेन शपथनिषेधात् । [4]तदाह गौतमः - [G 13.13-14]

359.360 शपथेनैकेन सत्यकर्म । तदेव ब्राह्मणसंसदि स्यादब्राह्मणानां ॥

[1]सत्यकर्म सत्यव्यवस्थानं ।

[2]एवं च ब्राह्मणव्यतिरिक्तानामपि साक्षिणामेकशपथोक्तौ क्षत्रियं वाहनायुधैरित्यादिबहुशपथोक्त्या विरोध इति न देश्यं, [3]गौतमवचनस्य गुणवत्साक्षिविषयतया पारिजाते संकोचनादिति ।

[4]मनुनारदौ -

361 ब्रूहीति ब्राह्मणं पृच्छेत् सत्यं ब्रूहीति पार्थिवं ।
गोबीजकांचनैर्वैश्यं शूद्रं सर्वैस्तु पातकैः ॥ [M 8.88 = NQ 5.5]

362 ब्रह्मघ्नां ये स्मृता लोका ये च स्त्रीबालघातिनां ।

---

355 साक्ष्यं साक्षी मृषा वदन् : LCM2 मा स्म(CM2 om) भूम्यनृतं वदीः । 356 °गज° : B2 हस्ति । 357 °विशेषः स्याद् : B2 विशेषतः । 358[2] विप्रमित्यप° : B2 विप्रमिति अप । 358[2] °पकृष्ट° : LCM2 नुत्कृष्ट ।

मित्रद्रुहः कृतघ्नस्य ते ते स्युर्वदतो मृषा ॥[M 8.89 = NQ 5.6]

363 जन्मप्रभृति यत्किंचित् पुण्यं भद्र त्वया कृतं ।
तत्सर्वं ते शुनो गच्छेद्यदि ब्रूयास्त्वमन्यथा ॥ [M 8.90 = NQ 5.7]

364 एको ऽहमस्मीत्यात्मानं यस्त्वं कल्याण मन्यसे ।
नित्यं स्थितस्ते हृद्येष पुण्यपापेक्षिता मुनिः ॥[M 8.91 = NQ 5.8]

365 यमो वैवस्वतो देवो यस्तवैष हृदि स्थितः ।
तेन चेदविवादस्ते मा गङ्गां मा कुरून् गमः ॥ [M 8.92 = NQ 5.9]

[1]यमः संयमनकर्ता । [2]वैवस्वतो सूर्यपुत्रः । [3]अविवादो ऽविसंवादः ।

[4]तथा -

366 नग्नो मुण्डः कपाली च भिक्षार्थी क्षुत्पिपासितः ।
अन्धः शत्रुकुलं गच्छेद्यः साक्ष्यमनृतं वदेत् ॥ [M 8.93 = N 1.201]

367 अवाक्शिरास्तमस्यन्धे किल्बिषी नरकं व्रजेत् ।
यः प्रश्नं वितथं ब्रूयात् पृष्टः सन् धर्मसंशये ॥[M 8.94 = N ?]

368 अन्धो मत्स्यानिवाश्नाति निरपेक्षः सकण्टकान् ।
यो भाषेतार्थवैकल्यमप्रत्यक्षं सभां गतः ॥ [M 8.95 = NMā 3.14]

369 यस्य विद्वान् हि वदतः क्षेत्रज्ञो नाभिशङ्कते ।
तस्मान्न देवाः श्रेयांसं लोके ऽन्यं पुरुषं विदुः ॥[M 8.96 = N ?]

[1]नारदः -

370 यावतो बान्धवान् यस्मिन् हन्ति साक्ष्यनृतं वदन् ।
तावतः संख्यया तस्मिन् शृणु सौम्यानुपूर्वशः ॥ [N 1.207]

371 पंच पश्वनृते हन्ति दश हन्ति गवानृते ।
शतमश्वानृते हन्ति सहस्रं पुरुषानृते ॥ [N 1.208]

372 हन्ति जातानजातांश्च हिरण्यार्थे ऽनृतं वदन् ।
सर्वं भूम्यनृते हन्ति मा स्म भूम्यनृतं वदीः ॥ [N 1.209]

[1]मनुः -

373 अप्सु भूमिवदित्याहुः स्त्रीणां भोगे ऽथ मैथुने ।

---

362 ते ते स्युर्वदतो : B2 ते तस्य वदतो । 363 भद्र : B2LCM2 भद्रं । 365 यस्तवैष : B2M1 यस्तु वैष । 365[3] ऽविसंवादः : B1B2 अविसंवादः । 368 °प्रत्यक्षं : LCM2 सत्यं च । 369 हि वदतः : LCM2 विवदतः । 372 वदीः : LCM2 वदेः M1 वदेत् । 372[1] मनुः : LCM2 om ।

अब्जेषु चैव रत्नेषु सर्वेष्वश्ममयेषु च ॥ [M 8.100]

374 पशुवत् क्षौद्रघृतयोर्यानेषु च तथाश्ववत् ।
गोवद्रजतवस्त्रेषु धान्ये ब्रह्मणि चैव हि ॥ [M 8.100']

375 एतान् दोषानवेक्षस्व सर्वाननृतभाषणे ।
यथाश्रुतं यथादृष्टं सत्यमेवांजसा वद ॥ [M 8.101]

[1] अर्थवैकल्यं अर्थान्यथात्वं ।

[2] पंच बान्धवान् माता पिता भार्या अपत्यमात्मा चेति पंचेति पारिजातः ।

[3] अप्सु तडागादिषु । [4] स्त्रीणां मैथुनरूपे भोगे । [5] अब्जेषु रत्नेषु जलजेषु मुक्तादिषु । [6] ब्रह्मणि वेदे । [7] अन्यत्र तु विषये सामान्यश्रुतमेवानिष्टमन्वीयते ।

[8] नारदः -

376 सत्यं ब्रूह्यनृतं त्यक्त्वा सत्येन स्वर्गमेष्यसि ।
उक्त्वानृतं महाघोरं नरकं प्रतिपद्यसे ॥ [N 1.216]

377 नरकेषु च ते शश्वत् जिह्वामुत्कृत्य दारुणाः ।
असिभिर्घातयिष्यन्ति बलिनो यमकिङ्कराः ॥ [N 1.217]

378 शूलैर्भेत्स्यन्ति चाक्रम्य क्रोशन्तमपरायणं ।
अवाक्शिरसमुत्क्षिप्य क्षेप्स्यन्त्यग्नौ ह्रदेषु च ॥ [N 1.218]

379 अनुभूय सुदुःखास्ताश्चिरं नरकवेदनाः ।
इह यास्यस्यभव्यासु गृध्रकाकादियोनिषु ॥ [N 1.219]

380 ज्ञात्वैताननृते दोषान् तथा सत्येषु सद्गुणान् ।
सत्यं वदोद्धरात्मानं नात्मानं पातय स्वयं ॥ [N 1.220]

381 न बान्धवा न सुहृदो न धनानि महान्त्यपि ।
अलं धारयितुं सर्वे तमस्यन्धे निमज्जतः ॥ [N 1.221]

382 पितरस्त्ववलम्बन्ते पुत्रे साक्षित्वमागते ।
तारयिष्यति किं त्वस्मान् किमधः पातयिष्यति ॥ [N 1.222]

383 सत्यमात्मा मनुष्यस्य सर्वं सत्ये प्रतिष्ठितं ।

---

375 [4] मैथुनरूपे : M1 मैथुनादिरूपे । 376 प्रतिपद्यसे : M1 प्रतिपत्स्यसे । 377 शश्वत् : B2 शश्वज् । 380 दोषान् : B1B2 दोषांस् । 382 त्वस्मान् : T.CM2 वास्मान ।

सर्वथैवात्मनात्मानं श्रेयस्यैव नियोजय ॥[N 1.223]

384 यां रात्रिमजनिष्ठास्त्वं यां च रात्रिं मरिष्यसि ।
वृथा तदन्तरं ते स्यात् साक्ष्यं चेदन्यथा वदेः ॥[N 1.224]

[1]याज्ञवल्क्यः -

385 सुकृतं यत्त्वया किंचिज्जन्मान्तरशतैः कृतं ।
तत्सर्वं तस्य जानीहि यं पराजयसे मृषा ॥[Y 2.75]

[1]मनुः -

386 गोरक्षकान् वाणिजकान् तथा कारुकुशीलवान् ।
प्रेष्यान् वार्द्धुषिकांश्चैव विप्रान् शूद्रवदाचरेत् ॥[M 8.102]

387 ये व्यपेताः स्वकर्मभ्यः परपिण्डोपजीविनः ।
द्विजत्वमभिकाङ्क्षन्ति तांश्च शूद्रवदाचरेत् ॥[M 8.102*]

[1]शूद्रवच्छपथं कारयेदित्यर्थः ।

[2]अथ साक्ष्युक्तिविधिः ।

[3]तत्र कात्यायनः -

388 समान्तस्थैस्तु वक्तव्यं साक्ष्यं नान्यत्र साक्षिभिः ।
सर्वसाक्ष्येष्वयं धर्मोऽन्यत्र स्यात् स्थावरेषु च ॥[K 387]

389 वधे च प्राणिनां साक्ष्यं वादयेच्छवसंनिधौ ।
तदभावे तु चिह्नस्य नान्यथैव प्रवादयेत् ॥[K 391]

390 अनुद्विग्नेन चित्तेन दृष्टं सम्यग्यदा तु यत् ।
प्रत्यक्षं तत्स्मृतं कार्यं साक्ष्यं साक्षी तु तद्वदेत् ॥[K ?]

[1]चिह्नस्य शवचिह्नस्यास्थिकेशादेः ।

[2]अशक्यानयने तु साक्षिणि कात्यायनः -

391 अशक्य आगमो यत्र विदेशप्रतिवादिनां ।
त्रैविद्यप्रहितं तत्र लेख्यं साक्ष्यं प्रदापयेत् ॥[K 352]

[1]तत्र साक्षिनिगदश्राविधार्मिकलिखनादिना निर्णयः कार्य इत्यर्थः ।

---

385 किंचिज् : B2M1 किंचित् ।387 °काङ्क्षन्ति : CM2 वांछन्ति ।387[1] शूद्रवच्छपथं : B2M1 शूद्रवत् शपथं ।387[3] तत्र कात्यायनः : LCM2 om । 390 सम्यग् : B1B2 सम्यक् । 390[1] °चिह्नस्यास्थिकेशादेः : B2 चिह्नस्य ।390[2] तु : LCM2 om ।

[2] बृहस्पतिः -

392 विहायोपानदुष्णीषं दक्षिणं पाणिमुद्धरेत् ।
हिरण्यगोशकृद्दर्भान् समादाय ऋतं वदेत् ॥ [B 5.42]

[1] अत्र दक्षिणपाण्युद्धारोऽवधानार्थोऽदृष्टार्थो वा ।

[2] गौतमः -

393 नासमवेताः पृष्टाः प्रब्रूयुः ॥ [G 13.6]

[1] असमवेता अमिलिताः ।

[2] कात्यायनः -

394 समवेतैस्तु यद्दृष्टं वक्तव्यं तत्तथैव हि ।
विभिन्नैर्नैककार्यं तु तद्वक्तव्यं पृथक् पृथक् ॥ [K 394]

395 भिन्नकालेषु यत्कार्यं विज्ञातं तत्र साक्षिभिः ।
एकैकं वादयेत्तत्र भिन्नकाले तु तद् भृगुः ॥ [K 395]

396 नापृष्टैरनियुक्तैर्वा समं सत्यं प्रयत्नतः ।
वक्तव्यं साक्षिभिः साक्ष्यं विवादस्थानमागतैः ॥ [K ?]

[1] नैककार्यमनेककार्यं ।

[2] तथा -

397 स्वभावोक्तं वचस्तेषां ग्राह्यं यद्दोषवर्जितं ।
उक्ते तु साक्षिणो राज्ञा न प्रष्टव्याः पुनः पुनः ॥ [K 392]

[1] अथ साक्षिपरीक्षा ।

[2] तत्र बृहस्पतिः -

398 उपस्थिताः परीक्ष्याः स्युः स्वरवर्णेङ्गितादिभिः ॥ [B 5.43ab]

[1] तत्र शङ्खलिखितौ -

399 तत्र मन्त्रिभिः शास्त्रसामर्थ्यात् दुष्टलक्षणं ग्राह्यं ॥ [ŚL ?]

[1] तदाह -

400 तिर्यक् प्रेक्षते समन्तादवलोकते अकस्मान्मूत्रपुरीषं विसृजति

---

392 [1] असमवेता : B2 असमवेताः । 394 तत् : LCM2 च । 395 तु : B2 पि ।
399 °सामर्थ्यात् : LCM2 सामर्थ्याद् । 400 अकस्मान् : M1 अकस्मात् ।

देशाद्देशान्तरं गच्छति पाणिना पाणिं पीडयति नखं नि-
कृन्तति मुखमस्य विवर्णतामेति प्रस्विद्यति वास्य ललाटं न
चक्षुर्न च वाचं प्रतिपूजयति अकस्माद् गदति प्रशंसति पुनः
पुनरन्यमपनुदति बहिर्निरीक्षते शस्त्रं परामृशति शोकमुपव-
र्णयति भूमिं विलिखति शिरः कम्पयते ओष्ठौ निर्मजति
सृक्कणी परिलेढि अविस्मितः कर्मसु महत्स्वपि भ्रुवौ संहरति
हसति तूष्णीं ध्यायति पूर्वोत्तरविरुद्धं व्याहरति एव-
मादि दुष्टलक्षणं क्रुद्धस्य स्वामिनोऽन्यत्र प्रकृतिशीलात् ॥[ŚL ?]

[1]विकृतस्वरादयः कूटत्वसम्भावनायां हेतव इति भावः ।

[2]अथ कूटसाक्षिदण्डः ।

[3]तत्र मनुः -

401 लोभात् सहस्रं दण्डः स्यात् मोहात् पूर्वं तु साहसं ।
भयाद् द्वौ मध्यमौ दण्डौ मैत्रात् पूर्वं चतुर्गुणं ॥[M 8.120]

402 कामाद्दशगुणं पूर्वं क्रोधाच्च त्रिगुणं परं ।
अज्ञानाद् द्वे शते पूर्णे बालिश्याच्छतमेव च ॥ [M 8.121]

403 एतानाहुः कूटसाक्ष्ये प्रोक्तान् दण्डान् मनीषिभिः ।
धर्मस्याव्यभिचारार्थमधर्मनियमाय च ॥ [M 8.122]

404 कूटसाक्ष्यं तु कुर्वाणांस्त्रीन् वर्णान् धार्मिको नृपः ।
प्रवासयेद्दण्डयित्वा ब्राह्मणं तु विवासयेत् ॥[M 8.123]

[1]सहस्रं पणानामिति शेषः । [2]मोहात् प्रमादात् । [3]पूर्वसाहसं सार्धप-
णशतद्वयं । [4]द्वौ मध्यमौ साहसावित्यर्थः । तेन पणसहस्रं । [5]पूर्वं चतुर्गु-
णं । तेन पणसहस्रं ।

[6]कामात् स्वनिगादकरादिस्त्र्यनुरागादितः । [7]दशगुणं पूर्वं तेन पंचविंश-
तिशती । [8]त्रिगुणं परं पूर्वापेक्षया मध्यसाहसमेव पंचशतपणरूपं तदेव

---

400 गदति : M1 ददाति । 400 कम्पयते : B1 प्रकम्पयते B2 प्रकम्पयति LC
M2 कम्पयति । 400 निर्मजति : M1 निर्मुजति । 400 सृक्कणी : M1 सृक्व-
णी । 400 कर्मसु : B1 स्वकर्मसु । 400 °लक्षणं : B2 लक्षणं ग्राह्यं । 400
°शीलात् : B1B2 शीलत्वात् LCM2 शीलादिति । 400[3] तत्र मनुः : B1 B2
om । 401 दण्डः : M1 दण्ड्यः । 402 बालिश्याच्छत° : B1B2 वालिश्यात्
शत । 404[6] °रागादितः : B2 रागतः ।

त्रिगुणमिह ग्राह्यं तेन सार्धसहस्रमित्यर्थः । [9] अज्ञानात् तात्कालिकभ्रमात् ।
[10] बालिश्यमत्र यौवनोन्मेषप्राप्तो मदः ।
[11] ब्राह्मणं त्विति - तुशब्देन ब्राह्मणस्य दण्डो व्यवच्छिद्यते । [12] तेन तस्य देशाद् बहिःकरणमात्रं दण्ड इत्यर्थः ।

[13] याज्ञवल्क्यः -

405 पृथक् पृथक् दण्डनीयाः कूटसाक्ष्यकृतस्तथा ।
विवादाद् द्विगुणं दण्डं विवास्यो ब्राह्मणः स्मृतः ॥ [Y 2.81]

[1] एतत्तु लोभादिबहुकारणानिश्चये ।

[2] तथा -

406 यः साक्ष्यं श्रावितोऽन्येभ्यो निह्नुते तु तमोवृतः ।
स दाप्योऽष्टगुणं दण्डं ब्राह्मणं तु विवासयेत् ॥ [Y 2.82]

[1] श्रावितः श्रावितवान् । [2] निह्नुते निगदकालेऽपलपति ।

[3] विष्णुः -

407 कूटसाक्षिणां सर्वस्वापहारः ॥ [Vi 5.179]

[1] एतच्च तच्छीलविषयं ।

[2] नारदः -

408 यस्य दृश्येत सप्ताहादुक्तसाक्ष्यस्य साक्षिणः ।
रोगोऽग्निर्ज्ञातिमरणं ऋणं दाप्यो दमं च सः ॥ [NQ 5.11]

[1] रोगास्तु -

409 ज्वरातीसारविस्फोटगूढास्थिपरिपीडनं ।
नेत्ररुग्गलरोगश्च तथोन्मादः प्रजायते ।
शिरोरुग्भुजभङ्गश्च दैविका व्याधयो नृणां [K 458]

[1] इत्येते ग्राह्याः । [2] अत्र रोगादिकं घोरं ग्राह्यं । [3] एतच्च वक्ष्यते ।

[4] बृहस्पतिः -

410 आहूतो यस्तु नागच्छेत् साक्षी रोगविवर्जितः ।
ऋणं दण्डं च दाप्यः स्यात् त्रिपक्षात् परतस्तु सः ॥ [B 5.45]

411 अपृष्टाः सत्यवचने पृष्टाश्चावचने तथा ।

---

404 [12] देशाद् : B1M1 देशात् । 405 पृथक् पृथक् : B1B2 पृथक् पृथग् । 405 [2] तथा : B2 om । 410 यस्तु : LCM2 यश्च ।

साक्षिणः संनिरोद्धव्या गर्ह्या दण्ड्याश्च धर्मतः ॥ [B 5.47]

[1] रोगपदमलङ्घ्यप्रतिबन्धकपरं । [2] ऋणपदं विवादवस्तुमात्रपरं ।

[3] कात्यायनः -

412 सम्यक्क्रियापरिज्ञाने देयः कालस्तु साक्षिणां ।
संदिग्धं यत्र साक्ष्यं स्यात् सद्यः स्पष्टं विवादयेत् ॥[K 341]

[1] निगाधास्मरणे तत्स्मरणार्थं कालो देयः । [2] स्मरणे तु सद्य एव साक्षिणो निगाधा इत्यर्थः ।

[3] कात्यायनः -

413 अवीचिनरके कल्पं वसेयुः कूटसाक्षिणः ॥[K ?]

[1] गौतमः - [G 13.7-8]

414.415 अवचने दोषिणः । स्वर्गिणः सत्यवचने विपरीते नारकाः ॥

[1] विपरीते अनृतवचने ।

[2] अथ सत्यापवादः ।

[3] तत्र मनुः -

416 शूद्रविट्क्षत्रविप्राणां यत्रर्तोक्तौ भवेद्वधः ।
तत्र वक्तव्यमनृतं तत्सत्यादतिरिच्यते ॥[M 8.104]

[1] ऋतोक्तौ सत्याभिधाने ।

[2] गौतमः -

417.418 नानृतवचने दोषो ऽस्ति जीवनं चेत्तदधीनं । न तु पापीयसो जीवनं ॥ [G 13.24-25]

[1] पापीयसः चौरादेः ।

[2] याज्ञवल्क्यः -

419 वर्णिनां हि वधो यत्र तत्र साक्ष्यनृतं वदेत् ।
तत्पावनाय निर्वाप्यश्चरुः सारस्वतो द्विजैः ॥ [Y 2.83]

---

411[1] °पदमलङ्घ्य : B2 पदमत्रालङ्घ्य । 411[1] °प्रतिबन्धक° : M1 प्रतिवन्ध । 412 स्पष्टं : B1LCM2 पृष्टं । 412[2] तु : B1 om । 417 चेत्तदधीनं : B2 तदधीनं चेत् । 419 वर्णिनां : M1 वर्णानां ।

[1]मनुः -

420 वाग्दैवतैश्च चरुभिर्यजेरंस्ते सरस्वतीं ।
अनृतस्यैनसस्तस्य कुर्वाणा निष्कृतिं परां ॥[M 8.105]

421 कुष्माण्डैर्वापि जुहुयाद् घृतमग्नौ यथाविधि ।
उदित्यृचा च वारुण्या त्र्यृचेनाब्दैवतेन वा ॥[M 8.106]

[1]चरुरनवस्रावितोऽन्तरूष्मपक्वतण्डुलः । [2] अब्दैवतेन आपो हि ष्ठे- त्यादिना ।

[3]विष्णुः -

422.423 तत्पापशोधनाय कुष्माण्डीर्जुहुयात् । शूद्रस्त्वेकाह्निकं गोदशकस्य ग्रासं दद्यात् ॥ [Vi 8.16-17]

[1]तत्पापं तादृगनृताभिधानजनितपापं । [2]जुहुयात् द्विजातिरिति शेषः । [3] आह्निकं दिवसाहाररूपं ।

[4] अथ साक्षिनिगदः ।

[5]तत्र व्यासः -

424 कालाकृतिवयोद्रव्यदेशजातिप्रमाणतः ।
अन्यूनं चेन्निगादितं सिद्धं साध्यं विनिर्दिशेत् ॥ [Vy 1.109]

[1]यावदुपयुक्तं वादिनोक्तं तावत्तत्साक्षिणा निगदे वादिनो जय इ- त्यर्थः ।

[2]बृहस्पतिः -

425 यस्याशेषं प्रतिज्ञातं साक्षिभिः प्रतिपादितं ।
स जयी स्यादन्यथा तु साध्यार्थं न समाप्नुयात् ॥ [B 5.44]

[1] अन्यथाशेषप्रतिज्ञातप्रतिपादनाभावे । [2] अयं च द्वेधा सम्भवति - अनभि- धाने अनपेक्षिताभिधाने वा । [3] अन्त्योऽपि चतुर्धा - न्यूनाभिधाने अ- धिकाभिधाने अज्ञानाभिधाने विरुद्धपदाभिधाने च ।
[4] अत्र सर्वत्र प्रकृतसाध्यासिद्धिः । [5]किंतु प्रथमतुर्ययोः प्रमाणान्तरमनुसर- णीयं [6] न तु तावतैव तद्भङ्गनिर्णयः [7]विचारारम्भकसंशयस्यानिवृत्तेः ।

---

419[1] मनुः : B1 om । 421 जुहुयाद् : B1B2 जुहुयात् । 421 च : B1 वा । 421[2] ०तेन आपो : B1M1 तेनापो । 423[2] जुहुयात् : B2 जुहुयाद् । 425[4] प्रकृत० : B1 om । 425[7] ०निवृत्तेः : B2 नुवृत्तेः ।

[8] न च न जानामीति निगदे पराजय एव वादिन इति प्रदीपलिखनविरोध इति वाच्यं । [9] प्रदीपकृता ह्यनिगदे संशयतादवस्थ्येन प्रमाणान्तरानुसरणं ब्रुवता अज्ञानाभावनिगदे ऽपि तस्योक्तप्रायत्वात् । [10] कथं तर्ह्यज्ञाननिगदे मङ्गलिखनं साक्षिज्ञानव्याप्तार्थविशेषाभिप्रायेणेति ।
[11] द्वितीयतृतीययोस्तु मानान्तरानुसरणमित्यत्र न्यूनमभ्यधिकं वेत्यादि-वचनमेव दर्शयिष्यते ।
[12] तस्मात् पंचमे परं मङ्गः । [13] तत्रैव विष्णुः -

426 यस्योचुः साक्षिणः सत्यां प्रतिज्ञां स जयी भवेत् ।
अन्यथावादिनो यस्य ध्रुवस्तस्य पराजयः ॥ [Vi 8.38]

[1] अन्यथावादिन इति - प्रतिज्ञातार्थस्यासत्यत्ववादिन इत्यर्थः । [2] पूर्वार्धे प्रतिज्ञातार्थसत्यत्वस्यैवोपस्थिततया अन्यथापदेन तदसत्यत्वस्यैवाभिधानात् [3] तथैव व्युत्पत्तेः । [4] वादिन इत्यस्य विभागे अर्थपौनरुक्त्यात् । [5] अन्यथेति मात्रस्य साकाङ्क्षतया भवन्तीत्यध्याहारगौरवात् । [6] अध्याहार-लक्षणवाक्यभेदापत्तेश्चेति ।

[7] अथानिगदाः ।

[8] तत्र नारदः -

427 निर्दिष्टेष्वर्थजातेषु साक्षी चेत् साक्ष्यमागतः ।
न ब्रूयादक्षरसमं न तन्निगदितं भवेत् ॥ [N 1.232]

[1] त्वं मह्यं हेम्नां शतस्य धारय एष च तद्वेदेत्युद्दिष्टः साक्षी यत्र द्रव्यं निगदति संख्यायां तु मुह्यते तत्र द्रव्यांशं तन्निगदनिरस्तसंशयमपहायानि-र्णीते संख्यांशे मानान्तरमनुसरणीयमित्येके । [2] द्रव्यांशे ऽपि क्रियान्तर-मिति सम्प्रदायः ।

[3] तथा -

428 न्यूनमभ्यधिकं वापि प्रब्रूयुर्यस्य साक्षिणः ।
तदप्यनुक्तं विज्ञेयमेष साक्षिविधिः स्मृतः ॥ [N 1.234]

[1] अयमर्थः - वादिना शतमाक्षिप्ते न तावदधिकाभिधानं साक्षिणः प्र-माणावगतसार्धशतग्रहणमूलकमिति वक्तुं शक्यते । [2] आदराभ्यासातिशयो

---

426[2] ०तार्थ० : B1 तार्थस्य । 426[3] ०पत्तेश्चेति : B2 पत्तेः । 427[1] द्र-व्यांशं : M1 द्रव्यांशे । 428 साक्षि० : LCM2 साक्ष्य ।

हि स्मृतिमूलसंस्काराधायक: ³स चार्थिन एव युज्यते न तु साक्षिण: । ⁴तेनार्थी न स्मरति साक्षी च स्मरत्यधिकमिति नोपपन्नं । ⁵नाप्यर्थि-कृतप्रतिज्ञासत्यत्वप्रतिपादनार्थं, ⁶अर्थिनाप्यधिकग्रहणस्याप्रतिज्ञातत्वात् । ⁷नापि विषयान्तरं, ⁸देशकालादे: प्रतिज्ञानात् ।⁹तेनान्यथानुपपत्त्या तावदवगम्यते ¹⁰यदयं ग्रहणस्वरूपं जानात्येव द्रव्यसंख्यादौ भ्रान्त इति मूलभूतवादिवाक्यविरोधादवसीयते । ¹¹न च भ्रान्तिमूलमभिधानमन्यतरप्र-तिज्ञासत्यत्वे प्रमाणं ।

¹²ननु भवत्वेवमधिकाभिधाने न्यूनाभिधाने तु कथं? ¹³उत्तरवाद्युक्तशताग्र-हणस्य साक्ष्यभिहितपंचाशद्ग्रहणे ऽपि सत्यत्वात् कथं न तस्य विजय:? ¹⁴उच्यते - ¹⁵नात्रोत्तरवादिन: शतसंख्यारूपे तात्पर्यं । ¹⁶तथा सति विशेषनिषेधप्रतिज्ञाया: शेषाभ्यनुज्ञाफलकत्वादिति न्यायेनोनशतसं-ख्यावच्छिन्नग्रहणस्वीकारप्रसङ्गात् । ¹⁷ किंतु शतं मया न गृहीतमित्य-स्यायमर्थो ¹⁸यत्तस्मिन् देशादौ न मयास्य किमपि गृहीतमिति । ¹⁹ पं-चाशद्ग्रहणाभिधाने ऽपि नान्यतरप्रतिज्ञासत्यत्वमिति साधूक्तं ²⁰ तदप्य-नुक्तमिति । ²¹ सर्वत्र चात्र संशयप्रशमनार्थं दिव्यादिना क्रियान्तरेण नि-र्णय:, ²²उक्तस्यापि संदेहानपाकरणेन फलतो ऽनुक्तत्वात । ²³ अतो नैतावता जयपराजयावधारणं किंतु क्रियान्तरमिति वाक्यार्थ: । ²⁴ तदु-क्तं -²⁵ न तन्निगदितं भवेदिति²⁶भवदेवस्मृतिसारादय: ।

²⁷नव्यास्तु - ²⁸ इयांस्तु विशेष: -²⁹साक्षिणा सर्वथा संख्यानभिधाने अधिकाभिधाने च सकलप्रतिज्ञायामेव क्रियान्तरं,³⁰संख्यायां भ्रान्तस्य तस्य द्रव्ये ऽपि भ्रमसम्भवात् ³¹तन्निगदस्यैवानुपादानात् । ³² न्यूनाभिधाने च पंचाशद्ग्रहणस्य भ्रान्त्यादिमूलत्वे शङ्काबीजाभावात् ³³ तदतिरिक्तान-भिधाने तु प्रस्मरणस्यापि शङ्कितत्वात् । ³⁴ धर्मव्यवहारे छलादेर्निरस-नीयत्वात् पंचाशद्ग्रहणनिगद आदीयते विरोधाद्यभावादिति संवादाय परीक्ष्यते । ³⁵न चात्राप्यनुक्तत्वातिदेशान्मानान्तरानुसरणं । ³⁶ परी-क्षयावध्युत्तीर्णे ऽस्मिन्न मानान्तरं वैयर्थ्यात् ³⁷साक्ष्यभिहितपंचाशत्पु-राणातिरिक्ते निर्णयान्तरमिति विवेचनीयं ।

---

428[6] °प्रतिज्ञातत्वात् : B1 प्रतिज्ञानात्। 428[9] तावदव° : B2M1 इदमव। 428[11] °सत्यत्वे : M1 सत्यत्व। 428[15] °रूपे : M1 स्वरूपे। 428[29] साक्षिणा : B1 B2 साक्षिणां। 428[30] तस्य : B1 om। 428[32] च : LCM2 om। 428[34] °व्य-वहारे : B2LCM2 व्यवहारे तु। 428[34] छलादेर्निरस° : B1 छलस्यावश्यनिरस।

[38]यत्तु नारदेनैकदेशविभावनेऽपि सर्वस्य विवादविषयस्य देयत्वमुक्तं तद्यथा -

429 अनेकार्थाभियुक्तेन सर्वार्थस्यापलापिना ।
विभावितैकदेशेन देयं तदपि युज्यते । इति । [N ?]

[1]तदनेकवचनविरोधेन यत्रैकग्रहणमन्यग्रहणाव्यभिचारि तद्विषयं व्याख्येयं। [2]तद्यथा - सुवर्णाद्यनेकवस्तुसहितं पात्रं चौरेण गृहीतं तत्रैकदेशस्यापि सुवर्णाद्यन्यतमस्य विभावने सर्वमेव देयं । [3] तथा च एकदेशपदं व्याप्यभूतैकदेशपरं, [4]एतद्वचनस्य न्यायमूलकत्वात् । [5] राजदण्डविषयं वा। [6] तदुक्तं याज्ञवल्क्येन -

430 सपणश्चेद्विवादः स्यात् तत्र हीनं प्रदापयेत् ।
दण्डं च स्वपणं चैव धनिने धनमेव च ॥ [Y 2.18]

[1] एकदेशविभावनयापि मया सर्वं देयमित्यादिर्यत्र पण इत्यर्थः । [2] अत्र स्वग्रहणात् परकृतः पणः परेण न देय इति द्रष्टव्यं ।

[3] साक्षिणा न्यूनस्याधिकस्य वाभिधाने द्रव्येऽपि क्रियान्तरमिति मिताक्षरा ।

[4] साक्षी च यदा प्रतिज्ञातार्थं पृष्टस्तं न ब्रूते किंतु तद्व्याप्यं तत्रापि तन्निगादकस्य वादिनोर्जय एव, [5] तदभिधानोपस्थापितानुमानेन वादिप्रतिज्ञातार्थस्य प्रमितत्वात् ।

[6] न च साक्षिणा तदनभिधानात् न तथैति वाच्यं ।

431 यस्योचुः साक्षिणः सत्यां प्रतिज्ञां स जयी भवेदिति [Vi 8.38ab]

[1] स्मृतेन्यायिमूलकतया साक्षिपदस्योपलक्षणत्वे केनापि प्रमाणेन यत्प्रतिज्ञातोऽर्थः प्रमितः स जयीत्येवंरूपत्वात् ।

432 साध्यार्थांशेऽपि गदिते साक्षिभिः सकलं भवेत् ।
स्त्रीसंगे साहसे चौर्ये यत्साध्यं परिकीर्तितं [K 397]

[1] इति कात्यायनवचनादेकदेशप्रमापणे सर्वदेयता चौर्यादाविति मिताक्षरा।

[2] श्रुतसाक्षी तु पृष्टो यत्राहमिममर्थमश्रौषमित्याह तत्र नार्थसिद्धिः, [3] शब्दार्थयोर्व्याप्त्यभावात् । [4]किंतु प्रत्यक्षादिव शब्दादप्यर्थं यत्रावधारय-

---

429 युज्यते : M1 युज्यत । 430[3] साक्षिणा : M1 साक्षिणां । 430[4] यदा : M1 यदि । 430[6] °भिधानात् : B2 भिधानान् । 431 भवेदिति : B2 भवेत् इति । 431[1] °ज्ञातोऽर्थः : CM2 ज्ञातार्थः । 431[1] जयीत्येवं : M1 जयी भवत्येवं । 432[1] °प्रमापणे : B1 प्रमाणे ।

ति तत्राप्रामाण्यशङ्काकलङ्कानालिङ्गितशब्देन प्रमितार्थो ऽर्थमेव यत्र निगदति तत्रैवार्थसिद्धिः ।[5] तत्कलङ्के तु न स साक्षी न वा तन्निगद आदेय इति ।

[6]पृष्टानां तु साक्षिणां वचनद्वैधे मनुः -

433 बहुत्वं परिगृह्णीयात् साक्षिद्वैधे नराधिपः ।
समेषु च गुणोत्कृष्टान् गुणिद्वैधे द्विजोत्तमान् ॥ [M 8.73]

[1]द्वैधं साक्ष्यन्तरोक्तव्यतिरेकाभिधायित्वं ।[2] एवं च न जानामीत्यभिधाने ऽपि न द्वैधं, [3]तस्य ज्ञानाभावपरत्वेन ज्ञेयाभावास्पर्शात् ।[4] समेष्विति - संख्यासाम्ये गुणाधिकाः तत्साम्ये जात्यधिका ग्राह्या इत्यर्थः ।[5] सर्वथासाम्ये तु मानान्तरानुसरणमिति भावः ।

[6]नारदः -

434 साक्षिविप्रतिपत्तौ च प्रमाणं बह्वो मताः ।
तत्साम्ये शुचयो ग्राह्यास्तत्साम्ये स्मृतिमत्तराः ॥ [N 1.229]

[1]विप्रतिपत्तिः द्वयोः परस्परविरुद्धाभावाभावनिगदः ।

[2]याज्ञवल्क्यः -

435 उक्ते ऽपि साक्षिभिः साक्ष्ये यद्यन्ये गुणवत्तराः ।
द्विगुणा वान्यथा ब्रूयुः कूटाः स्युः पूर्वसाक्षिणः ॥ [Y 2.80]

[1]कात्यायनो ऽपि -

436 यदा वै भाषितं कार्यं साक्षिभिर्वादिनां भवेत् ।
प्रतिवादी यदा तत्र भावयेत् कार्यमन्यथा ।
बहुभिर्वा कुलीनैर्वा कूटाः स्युः पूर्वसाक्षिणः ॥ [K 408]

[1]कूटा अनादेयनिगदाः ।

[2]ननु -

437 क्रियां बलवतीं त्यक्त्वा दुर्बलां यः समाश्रयेत् ।
स जये ऽवधृते सभ्यैः पुनस्तां नाप्नुयात् क्रियामिति [K 221]

---

432[4] प्रमितार्थो ऽर्थमेव : M1 प्रमितार्थमेव । 432[5] स : B1 om । 433[2] ऽपि : B1 om । 433[3] ऽस्पर्शात् : CM2 स्पर्शनात् । 434 च : B1 तु । 434[1] °पत्तिः द्वयोः : LCM2 पत्तिर्द्वयोः । 435[5] कात्यायनोऽपि : B1L कात्यायनः ।

[1] कात्यायनविरोधात् कथं द्विगुणसाक्ष्यादिग्रहणं घटेतेति चेत् । [2] स जये ऽवधृत इति विशेषणादेतद्वाक्यस्य जयावधारणोत्तरविषयत्वात् । [3] याज्ञवल्क्यादिवचनस्य च सामान्यमुखस्य जयानवधारणदशाविषयकत्वात् । [4] त्यक्त्वेति अनुपन्यस्येत्यर्थः । [5] तेनानुपन्यस्तमपि बलवत्प्रमाणं दुर्बलप्रमाणप्रवृत्त्युत्तरमप्युपन्यस्तं संशयदशायां व्यापार्यमेव । [6] अत एव सप्तदिनाभ्यन्तरे बलवत्प्रमाणान्तरस्य ग्रहणं तदुपरि च तदग्रहणमिति रत्नाकरकृता सिद्धवल्लिखितं ।

[7] नारदः -

438 निर्णिक्तव्यवहाराणां प्रमाणमफलं भवेत् ।
लिखितं साक्षिणो वापि पूर्वमावेदितं न चेत् ॥[NMā 1.62]

[1] पूर्वमिति - पूर्वमुपन्यस्तं बलवत्प्रमाणं यत् साक्ष्यादिकं वादिना दूरत्वादिदोषात् व्यापारयितुमशकितं विचारकैणाशक्यत्वभ्रमेणापुरस्कृत्य यत्र दुर्बलं प्रमाणमादृतं तत्र सप्ताहोत्तरमपि बलवत्प्रमाणोपस्थितौ तत्पुनर्व्यापार्यमित्यर्थः । [2] इदं च पुनर्दर्शनं विचारस्य शक्यव्यापारणे बलवति प्रमाणे अशक्यव्यापारणत्वभ्रमेण तद्दोषजं । [3] तदुक्तं -

439 साक्षिसभ्यावसन्नानां दूषणे दर्शनं पुनरिति ॥ [NMā 2.40ab]

[1] प्रदीपादयो ऽप्येवमेव ।

---

437[1] कात्यायन° : B1B2 कात्यायनवचन । 437[1] चेत् : B1 चेत् न । 438[1] यत् : M1 सत् ।

(439) [2] अथ लिखितं ।

[3] तत्र बृहस्पतिः -

440 षाण्मासिके ऽपि समये भ्रान्तिः संजायते यतः ।
धात्राक्षराणि सृष्टानि पत्त्रारूढान्यतः पुरा ॥[B 6.2]

[1] नारदः -

441 लेख्यं तुद्विविधं प्रोक्तं स्वहस्तान्याकारं तथा ।
असाक्षिकं साक्षिमच्च सिद्धिर्देशस्थितेस्तयोः ॥ [N 1.135]

[1] स्वलिखितं साक्षिणमनपेक्ष्यैव प्रमाणमन्यलिखितं तु तमपेक्ष्येत्यर्थः ।

[2] तच्च ऋणक्रयभागदानव्यवस्थाजयपत्त्रभेदात् षोढा । [3] दानपत्त्रमपि द्वे-धा अराजराजभेदात् । [4] इदं च षड्विधमपि सदसद्भेदात् प्रत्येकं द्वेधा ।

[5] याज्ञवल्क्यः -

442 विनापि साक्षिभिर्लेख्यं स्वहस्तलिखितं तु यत् ।
तत्प्रमाणं स्मृतं सर्वं बलोपाधिकृताद्दृते ॥ [Y 2.89]

[1] स्वहस्तेनेति - तल्लेख्यप्रामाण्येन यो ऽभियोज्यस्तल्लिखितमित्यर्थः ।
[2] बलेत्यप्रामाण्यप्रयोजकार्तिरागद्वेषभयशैशवादिसर्वदोषोपलक्षणं ।

[3] द्वितीये नारदः -

443 साक्षिणश्च स्वहस्तेन पितृनामादिपूर्वकं ।
अत्राहममुकः साक्षी लिखेयुरिति ते समाः ॥ [Y 2.87]

[1] शासने तु याज्ञवल्क्यः -

444 दत्त्वा भूमिं निबन्धं वा कृत्वा लेख्यं तु कारयेत् ।
तत्र चागामिनृपतिपरिज्ञानाय पार्थिवः ॥ [Y 1.318]

445 पटे वा ताम्रपट्टे वा स्वमुद्रोपरिचिह्नितं ॥ [Y 1.319ab]

[1] निबन्ध आकारादौ नियतग्राह्यं ।

---

442 तु : LCM2 च । 442[1] ऽभियोज्यस् : B1 भियोज्यः । 445[1] नियत० : B2LCM2 नियतं ।

[2]जयपत्रं तूक्तं प्राक् ।

[3]लेख्यस्य चाप्रामाण्यशङ्कायां लेख्यग्रहीत्रा तन्निरसनीयं । [4]तत्पुत्रेण तु लेख्याधीनो भोग एवोपन्यस्यो न तु लेख्यमुद्धरणीयं । [5]तदाह कात्यायनः -

446 आहर्ता भुक्तियुक्तो ऽपि लेख्यदोषान् विशोधयेत् ।
तत्सुतो भुक्तिदोषांस्तु लेख्यदोषांस्तु नाप्नुयात् ॥ [K 323]

[1]बृहस्पतिः -

447 उद्धरेल्लेख्यमाहर्ता तत्पुत्रो भुक्तिमेव तु ।
अभियुक्तः प्रमीतश्चेत् तत्सुतो ऽपि तदुद्धरेत् ॥ [B 6.39]

[1]अभियुक्त इति - लेख्यसाधुत्वज्ञानार्थमभियुक्ते लेख्यग्रहीतरि तदविज्ञाप्यैव प्रमीते तत्पुत्रेण तत्साधुत्वं साध्यमित्यर्थः ।

[2]कात्यायनः -

448 दृष्टे पत्त्रे स्फुटं दोषं नोक्तवानृणिको यदि ।
ततो विंशतिवर्षाणि क्रान्तं पत्त्रं स्थिरं भवेत् ॥ [K 298]

449 शक्तस्य संनिधावर्थो यस्य लेख्येन भुज्यते ।
वर्षाणि विंशतिं यावत्तत्पत्त्रं दोषवर्जितं ॥ [K 299]

[1] अथ लेख्यदौर्बल्यं ।

[2]तत्र व्यासः -

450 अदृष्टाश्रावितं लेख्यं प्रमीतधनिकर्णिकं ।
अबन्धलग्नकं चैव बहुकालं न सिध्यति ॥ [Vy 1.69]

[1]अदर्शितत्वादिसप्तदोषाश्रये लेख्यं न प्रमाणमित्यर्थः ।

[2]अस्यापवादमाह बृहस्पतिः -

451 उन्मत्तजडबालानां राजभीतप्रवासिनां ।
अप्रगल्भभयार्तानां न लेख्यं हानिमाप्नुयात् ॥ [B 6.52]

[1]उन्मत्तादीनां लेख्यमदर्शितत्वादिना न हानिमाप्नोतीत्यर्थः ।

---

451[1] ०प्नोतीत्यर्थः : B2 प्नोति इत्यर्थः ।

(451) ²अथ भुक्तिः ।

³तत्र व्यासः -

452 सागमो दीर्घकालश्च निश्छिद्रो ऽन्यरवोज्झितः ।
प्रत्यर्थिसंनिधानश्च पंचाङ्गो भोग इष्यते ॥ [Vy 1.84]

¹प्रमाणमिति शेषः । ²आगच्छति स्वीभवत्यनेनेत्यागमः क्रयादिः तद्वान् । ³दीर्घकालः स्मृत्युक्तकालान्यूनकालः । ⁴निश्छिद्रो निरन्तरः । ⁵अन्यरवोज्झितः परविप्रतिपत्तिप्रकाशशून्यः । ⁶प्रत्यर्थिनो वाधन्यतरस्य संनिधानं यत्र तादृशः ।

⁷ननु सागमत्वं व्यर्थं, ⁸तद्रहितभोगस्यापि प्रामाण्यात् । ⁹तदाह नारदः -

453 अन्यायेन तु यद् भुक्तं पित्रा पूर्वतरैस्त्रिभिः ।
न तच्छक्यमपाकर्तुं क्रमात् त्रिपुरुषागतं ॥ [N 1.91]

454 यद्विनाप्यागमं पूर्वं भुक्तं पूर्वैस्त्रिभिर्भवेत् ।
न तच्छक्यमपाकर्तुं क्रमात् त्रिपुरुषागतं ॥ [N 1.93°]

¹व्यासः -

455 यद्विनागममत्यन्तं भुक्तं पूर्वतरैस्त्रिभिः ।
न तच्छक्यमपाकर्तुं क्रमात् त्रिपुरुषागतं ॥ [Vy 1.85]

¹त्रिपुरुषभोगमाह व्यासः -

456 प्रपितामहेन यद् भुक्तं तत्पुत्रेण च तं विना ।
तौ विना यस्य पित्रा च तस्य भोगस्त्रिपूरुषः ॥ [Vy 1.83]

¹पुरुषजीवनानियमात् पुरुषभोगं परिभाषते स एव -

457 वर्षाणि विंशतिं भुक्त्वा स्वामिनाव्याहृता सती ।
भुक्तिः सा पौरुषी भूमेर्द्विगुणा च द्विपुरुषी ।
त्रिपुरुषी च त्रिगुणा न तत्रापेक्ष्य आगमः ॥ [Vy 1.81]

¹एवं च त्रिपुरुषभोग आगमनिरपेक्ष एव प्रमाणमिति न, ²वचनान्तरविरोधात् । ³तदाह विष्णुः -

---

452 ⁶वाध° : B1 वादिप्रतिवाद । 454 °कर्तुं : B1 हर्तुं । 454-455 यद्विना° ... °पुरुषागतं : B2 om । 457 द्विपूरुषी : B2LCM2 द्विपौरुषी । 457 त्रिपुरुषी : B2 त्रिपौरुषी ।

458 सागमेन तु भोगेन भुक्तं सम्यग्यदा भवेत् ।
आहर्ता लभते तत्र नापहार्यस्तु तत्क्वचित् ॥ [Vi 5.185]

[1] आहर्ता भोक्ता । [2] अपहार्यस्तद्धनस्वामी ।

459 पित्रा भुक्तं तु यद्द्रव्यं भुक्त्याचारेण धर्मतः । [Vi 5.186]
तस्मिन् प्रेते न वाच्यो ऽसौ भुक्त्या प्राप्तं हि तस्य तत् ॥

460 त्रिभिरेव तु या भुक्ता पुरुषैर्भूर्यथाविधि ।
लेख्याभावे ऽपि तां तत्र चतुर्थः समवाप्नुयात् ॥ [Vi 5.187]

[1] भुक्त्याचारेण निश्शङ्कत्वादिना । [2] यथाविधि शक्तस्य संनिहितस्य विरोधादिकं विनेत्यर्थः ।

[3] याज्ञवल्क्यः -

461 आगमेन विशुद्धेन भोगो याति प्रमाणतां ।
अविशुद्धागमो भोगः प्रामाण्यं नैव गच्छति ॥ [Y ?]

[1] नारदो ऽपि -

462 अनागमं तु यो भुङ्क्ते बहून्यब्दशतानि तु ।
चोरदण्डेन तं पापं दण्डयेदवनीपतिः ॥ [N 1.87]

[1] हन्तैवं विरोधात् संशय एवास्त्विति । [2] न, [3] विषयभेदात् । [4] तथा हि पूर्वेषां वचनानामागमसंदेहमुत्तरेषां तु तद्भावनिश्चयमालम्ब्य प्रवृत्तेः । [5] तथा च त्रिपुरुषभोगस्थले आगमसंशये ऽपि भोगः प्रमाणं अन्यत्र त्वागमनिश्चयसहित एवेति सिद्धं ।

[6] याज्ञवल्क्यः -

463 पश्यतो ऽब्रुवतो हानिर्भूमेर्विंशतिवार्षिकी ।
परेण भुज्यमानाया धनस्य दशवार्षिकी ॥ [Y 2.24]

[1] धनस्य गवादेः ।

[2] बृहस्पतिः -

464 अध्यासनात् समारभ्य भुक्तिर्यस्याविघातिनी ।
त्रिंशद्वर्षाण्यवच्छिन्ना तस्य तां न विचालयेत् ॥ [B 7.28]

---

460 [2] विरोधादिकं : B2 विरोधं । 462 दण्डयेदवनीपतिः : M1 दण्डयेत् पृथिवीपतिः । 462 [5] च : B1B2 om । 462 [6] याज्ञवल्क्यः : B2 om । 463 [2] बृहस्पतिः : B1 om ।

[1]अध्यासनं क्रयादिरागमः ।

[2]नन्वनयोरेव वचनयोः परस्परविरोधः [3]त्रिंशद्वर्षभुक्तेः प्रामाण्योक्त्या विंशतिवर्षभुक्तेरर्थतः प्रामाण्यनिरासादिति । [4]न, [5]पश्यतो ऽब्रुवत इत्यभिधानाद्यत्र विरुद्धं वाङ्मात्रमपि नास्ति तत्र विंशतिवर्षभोग एव प्रमाणं, [6]त्रिंशद्वचने चाविघातिर्नीति श्रुतेर्विघातपदार्थस्य कलहताडनादेरेव निषेधात् वाङ्मात्रविप्रतिपत्तौ सत्यामपि त्रिंशद्वर्षभोगो भूस्वत्वे प्रमाणमित्यविरोधात् । [7]एवं चाभ्यां वचनाभ्यां गवादौ नीरवो दशवार्षिको भोगस्तथा भूमौ तादृश एव विंशतिवार्षिकस्तथा भूमावेव सरवो ऽपि कलहादिशून्यः त्रिंशद्वार्षिकभोगः प्रमाणं ।

[8]तत्कथं त्रिपुरुष एवासौ प्रमाणमुच्यत इति [9]अत्र रत्नाकरः - [10]न हुक्तवचनं भोक्तुः स्वत्वे प्रमाणं किंत्वन्यत्र । [11]तथा हि पश्यतो ऽब्रुवत इत्यादेस्तादृशस्य भोक्तुः पार्श्वे गोभूम्यादिस्वामिना तद्भोगसम्बन्धेन धनं न लभ्यत इत्यर्थः ।

465 भुज्यमानान् परैरर्थान् यस्तान्मोहादुपेक्षते ।
समक्षं पश्यतो ऽप्यस्य तान् भुक्तिः कुरुते वश [N 1.78]

[1]इति नारदवचनस्याप्यसावेवार्थः ।

[2]प्रदीपस्तु - [3]आधेरनुपभोगेन यत्रासिद्धिस्तद्विषयं पश्यतो ऽब्रुवत इत्यादिवचनं । [4]तेन यत्राधिग्रहीत्रा आधेयं भूम्यादि न भुज्यते किंत्वाधिकर्त्रैव चिरं भुक्त्वा अन्यत्राधीयते तत्रोत्तरस्याधिग्रहीतुस्तत्र भूम्यादौ प्रभुत्वं न तु प्रथमस्य । [5]तथा च यद्यपि

466 आधौ प्रतिग्रहे क्रीते पूर्वैव बलवत्तरे- [Y 2.23cd]

[1]त्यादिकमपि वचनमस्ति, [2]तथापि तदपवादकं पश्यतो ऽब्रुवत इत्यादिवचनं । [3]तथा चापवादकबलात् द्वितीयस्यैवाधिः सिध्यति । [4]प्रपंचो ऽप्येवं ।

[5]यद्वा हानिपदमेवं उपेक्षितुः पक्षो विचारकस्य न्यूनकोटिकः संशयो भवतीत्येवम्परं । [6]न तु हानिर्भङ्ग एव । [7]तथा सति दण्डमन्तरेण पुनर्द-

---

464[1] अध्यासनं : M1 अत्राध्यासनं। 464[3] °र्थतः : M1 र्थात्। 464[5] °भिधानाद् : B2LCM2 भिधानात् । 464[5] °भोग एव : LCM2 भोगः । 464[6] त्रिंशद्वर्षभोगो : LCM2 त्रिंशद्वर्षभोगः प्रमाणं अव्याहता सतीति श्रुतेः कलहताडनादौ सत्यपि षष्टिवार्षिको भोगो । 464[7] भोगस् : B2 भोगः । 464[7] °शून्यः : B1 शून्यस् । 464[8] °च्यत : B2 च्यते । 466 बलवत्तरेत्या° : B2 वलवत्तरा इत्यादि । 466[1] °दिकमपि : B1 दि । 466[3] °बलात् : B2 वशात्।

शीनं हीनस्य गृह्यते वाद इत्यादिवचनसिद्धं न घटते । [8]तस्मात्तादृशहा-
निमतो ऽप्यस्य पुनर्विचारेणैव निर्णयः कार्यः । [9]अत एव -

467 उपेक्षिता यथा धेनुर्विना पालेन नश्यति ।
पश्यतो ऽन्यैस्तथा भुक्ता भूमिः कालेन हीयते ॥ [Vy 1.76]

468 वर्षाणि विंशतिं यस्य भूमिर्भुक्ता परैरिह ।
सति राज्ञि समर्थस्य तस्य सेह न सिध्यतीति [Vy 1.77]

[1]व्यासवचनयोः पश्यन्तमनादृत्य या यस्य भूः परैर्भुज्यते सा तस्य हीयते तदीयत्वेन न निश्चीयत इति रत्नाकरे ऽपि व्याख्यातं । [2] किंच यदि विंशतिवार्षिकी भुक्तिः स्वत एव स्वत्वे प्रमाणं तदा तत एव साध्यसिद्धौ -

469 शक्तस्य संनिधावर्थो यस्य लेख्येन भुज्यते ।
वर्षाणि विंशतिं यावत्तत्पत्रं दोषवर्जितमिति [K 299]

[1]कात्यायनवचनेन यद्भोगस्य लेख्यदोषनिराकरणार्थत्वमुक्तं तद् व्याहन्येत ।

[2]वस्तुतस्तु हानिबोधकस्मृतीनां प्रमाणपरिपालनकर्तव्यताविधिशेषत्वं ।
[3]तस्मात् स्वप्रमाणं सर्वथा परिपालनीयं न तु तत्रोदासितव्यमित्यत्र तात्पर्यं । [4]अत एव कल्पतरौ हानिवचनानि लिखित्वा प्रमाणपरिपालनमुपसंहृतं ।

[5]याज्ञवल्क्यः -

470 आगमो ऽपि बलं नैव भुक्तिस्तोकापि यत्र नो ॥ [Y 2.27cd]

[1]आगमे विद्यमाने ऽपि भोगविरहात् तावत्कालं स्वत्वानुवृत्तिर्धीर्न भवतीत्यर्थः । [2]यत्र वादिनोः स्वस्वागमबलप्रवृत्तौ आगमयोश्च पूर्वापरभावो न निश्चीयते तत्र यस्य भुक्तिस्तस्यागमो बलीयान्न त्वन्यस्येत्यर्थ इति मिताक्षराकारः ।

[3]नारदः -

---

466 [7] घटते : M1 घटेत । 466 [8] °विचारेणैव : LCM2 विचारेण । 468 यस्य : B1B2 सम्यक् । 468 [1] निश्चीयत : B2 निर्णीयत । 469 [2] °परिपालन° : B1 पालन । 470 [2] °प्रवृत्तौ : B1LCM2 वृत्तौ । 470 [3] °र्थे : B2 र्थः । 470 [3] नारदः : CM2 om ।

471 विद्यमाने ऽपि लिखिते जीवत्स्वपि हि साक्षिषु ।
विशेषतः स्थावराणां यन्न भुक्तं न तत् स्थिरं ॥[N 1.77]

[1]न तत् स्थिरं न तत्स्वत्वसाधकप्रमाणवद् भवतीत्यर्थः ।

[2]तथा –

472 प्रत्यक्षपरिभोगात्तु स्वामिनो द्विदशाः समाः ।
आध्यादीन्यपि जीर्यन्ति स्त्रीनरेन्द्रधनादृते ॥ [N 1.82]

[1]द्विदशाः समाः विंशतिवर्षाणि । [2] स्त्रीनरेन्द्रधनादृते स्त्रीधनराजधने विहाय ।

[3]मनुः –

473 यत्किंचिद्दशवर्षाणि संनिधौ प्रेक्षते धनी ।
भुज्यमानं परैस्तूष्णीं न स तल्लब्धुमर्हति ॥ [M 8.147]

[1]दशेति भूमिन्नधनपरं ।

[2]गौतमः –

474 अजडापोगण्डधनं दशवर्षभुक्तं परैः संनिधौ भोक्तुः ॥[G 12.34]

[1]जडो मूर्खः । [2] पोगण्डः षोडशवर्षाभ्यन्तरवयस्कः –

475 बाल आ षोडशाज्ज्ञेयः पोगण्डश्चेति कथ्यत [N 1.35cd]

[1]इति वचनात् । [2]एवं च प्रवीणस्य धनं संनिधावन्येन भुक्तमुत्सर्गतो भोक्तुरिति ज्ञायत इति रत्नाकरादयः ।

[3]मनुः –

476 आधिश्चोपनिधिश्चोभौ न कालात्ययमर्हतः ।
अवहार्यौ भवेतां तौ दीर्घकालमवस्थितौ ॥[M 8.145]

[1]आधिर्बन्धः । [2] उपनिधिस्तु प्रीत्या भोगार्थं समर्पितं क्षेत्रादि न तु वासनस्थमनाख्यायेत्यादिस्मृतिलक्षितः, [3] तस्य भोगानर्हत्वात् । [4]न कालात्ययमर्हतः मोक्षणकाले आधात्रुपनिधातृभ्यां अवश्यमोक्षणीयावित्यर्थः । [5]अत्र हेतुमाह – [6]अवहार्यावित्यादिना । [7]तौ हि चिरकालाव-

---

471[1] न तत्स्थिरं : B2 om । 472[1] समाः : B1B2 समा । 474 परैः संनिधौ : B1 संनिधौ परैः । 474[2] षोडशवर्षा° : M1 षोडशाब्दा । 475 कथ्यत : B2M1 कथ्यते । 475[2] संनिधावन्येन : B2 संनिधौ परेण । 476[2] °लक्षितः : B2 लक्षितस LCM2 लक्षितं । 476[4] अवश्य° : B2 अवश्यं ।

स्थितौ भोक्तुरवहार्यौ भवेतां भोक्ता च कदाचिदपहरेदपीत्यर्थः ।

[8] बृहस्पतिः –

477 ऋक्थिभिर्वा परैर्द्रव्यं समक्षं यस्य दीयते ।
अन्यस्य भुंजतः पश्चान्न स तल्लब्धुमर्हति ॥ [B 7.40]

478 पश्यन्नन्यस्य ददतः क्षितिं यो न विचालयेत् ।
स्वामी सतापि लेख्येन पुनस्तां न समाप्नुयात् ॥ [B 7.41]

[1] तथा –

479 भूमेरभुक्तिर्लेख्यस्य यथाकालमदर्शनं ।
अस्मारणं साक्षिणां च स्वार्थहानिकराणि तु ॥ [B 7.66]

480 तस्माद्यत्नेन कर्तव्यं प्रमाणपरिपालनं ।
तेन कार्याणि सिध्यन्ति स्थावराणि चराणि च ॥[B 7.67]

[1] ऋक्थिभिरिति – यस्य स्वामिनः समक्षमेव ऋक्थिभिर्वा परैर्वा तदीयधनमन्यस्य कृते दीयते तस्मात् सम्प्रदानात् तच्च द्रव्यं भुंजानात् तद्द्रव्यस्वामी तद्द्रव्यं पुनर्नाप्नोति । [2] तत्र स्वामिन उत्सर्गतः स्वत्वमपैतीत्यर्थः ।

[3] कात्यायनः –

481 भुक्तिर्बलवती शास्त्रे संतता या चिरन्तनी ।
विच्छिन्नापि हि सा ज्ञेया या तु पूर्वप्रसाधिता ॥ [K 329]

482 आदानकालादारभ्य भुक्तिर्या तु निरन्तरा ।
आदानं प्राप्य तस्यास्तु प्रायः साक्ष्यं प्रवर्तते ॥ [K ?]

483 स्मार्ते काले क्रिया भूमेः सागमा भुक्तिरिष्यते ।
अस्मार्ते त्वागमाभावात् क्रमात् त्रिपुरुषागता ॥ [K 321]

[1] संतता अविच्छिन्ना । [2] चिरन्तनी व्यासाद्युक्तकालव्यापिनी । [3] विच्छिन्नापीति – या तु भुक्तिः पूर्वैः पितामहादिभिः कृता सा विच्छिन्नापि ज्ञेयेत्यर्थः ।

[4] ज्ञेयं दर्शयति आदानेति – [5] अस्यामल्पकालायामेव निरन्तरायां तथा पूर्वोक्तायां सान्तरायामुभयस्यामपि भुक्तौ स्वमूलभूत आगमे प्रत्याय्ये

---

477 पश्चान्न : B1(corr sh)B2 पश्यन् न । 478[1] तथा : CM2 om ।
480[1] तदीय° : M1 तदीयं । 483 [5] अस्या° : B1 यस्या B2 तस्या ।

प्राय: साक्ष्यं प्रमाणत्वमित्यर्थ: ।
[6]स्मार्ते इति - स्मार्ते स्मरणयोग्ये। [7]क्रिया प्रमाणं । [8]आगम: क्रयादि: । [9] आगमाभावात् आगमप्रतिसंधानाभावात् । [10] तेनायमर्थ: -[11]आगमस्मरणायोग्ये समये सागमा भुक्तिर्भूमौ प्रमाणमिष्यते । [12] आगमस्मरणायोग्ये तु अतिपातिनि समये आगमप्रतिसंधानविरहिता भुक्तिरेव प्रमाणं न त्वागमाभावनिश्चये ऽपि, [13] तत्र सर्वै: स्वत्वनिषेधादिति ।

[14]अथ सागमभुक्ते: प्रमाणत्वे व्यर्थविशेषणता । [15] न - इदमिदानीं मम स्वमिति हि तावत् साध्यं । [16] तत्र हि स्वत्वभागे आगमस्य तन्त्रता तस्य त्विदानीं पर्यन्तमनुवृत्तौ भोगस्यैति विवेक: ।

[17]याज्ञवल्क्य: -

484 आगमस्तु कृतो येन सो ऽभियुक्तस्तमुद्धरेत् ।
न तत्सुतस्तत्सुतो वा भुक्तिस्तत्र गरीयसी ॥[Y 2.28]

[1]आगमो धनोपार्जनोपाय: क्रयादि: । [2]तत्राभियुक्तस्तैमुद्धरेत् लिखितादिना प्रमापयेत् । [3] तत्सुतस्य तु सागमा भुक्तिरेव प्रमाणं न त्वागमपरिशोधनमपि तेन कर्तव्यमित्यर्थ: ।

[4]बृहस्पति: -

485 आहर्ता शोधयेद् भुक्तिमागमं चापि संसदि ।
तत्सुतो भुक्तिमेवैकां तत्पुत्रादिर्न किंचन ॥[B 7.39]

[1]आहर्ता अर्जनकर्ता ।

[2]कात्यायन: -

486 येनोपात्तं हि यद्द्रव्यं सो ऽभियुक्तस्तदुद्धरेत् ।
चिरकालोपभोगे ऽपि भुक्तिस्तस्यैव नेष्यते ॥ [K 324]

[1]अर्जकस्य चिरकालभुक्तिरपि स्वागमविभावनं विना न प्रमाणमिष्यत इत्यर्थ: ।

487 यदाहर्ताभियुक्त: स्यात् लेख्यं साक्षी तदा गुरु ।

---

483[5] प्रमाणत्वमित्यर्थ: : B2 प्रमाणमित्यर्थ: । 483[6] स्मार्ते इति स्मार्ते : B1 स्मार्ते इति स्मार्ते LCM2 स्मार्ते । 486[1] स्वागम ° :LCM2 आगम । 487 स्यात् : B2LCM2 स्यात् । 487 साक्षी : B2M1 साक्ष्यं। 487 गुरु : LCM2 गुरु° ।

भोक्त्रभावे हि भुक्तिस्तु सुते ताभ्यां गरीयसी ॥[K ?]

[1] अर्जक: स्वार्जिते प्रमाणत्वेन लेख्यादिकं दर्शयेत् । [2] अर्जकाभावे तत्सुतस्य लेख्यादितो भुक्तिरेव प्रमाणमित्यर्थ: ।

488 नोपभोगे बलं कार्यमाहर्त्रा तत्सुतेन वा ।
पशुस्त्रीपुरुषादीनामिति धर्मो व्यवस्थित: ॥[K 316]

[1] आदिपदं जङ्गमान्तरपरं । [2] अत्र चेयं व्यवस्था - [3]यदर्जकस्यापि लेख्यसाक्षिविरहे पंचाङ्गो भोग: प्रमाणमेव वाक्यानि तु प्रायिकपरतया बोद्धव्यानि एवं पश्वादिष्वपि केवलभोगप्रामाण्यनिषेध: प्रायिकपरतयैव नेय: ।

[4] याज्ञवल्क्य: -

489 यो ऽभियुक्त: परेत: स्यात् तस्य रिक्थी तमुद्धरेत् ।
न तत्र कारणं भुक्तिरागमेन विना कृता ॥[Y 2.29]

[1] यो भोगे क्रियमाणे एव परेणाभियुक्त: कृतापरिच्छेद: सन् परेत: मृत: तस्य रिक्थी पुत्रादि: तदर्थमागमेनोद्धरेत् साधयेत् । [2] भुक्तिस्तत्र न प्रमाणं पूर्वाभियोगेन सत्प्रतिपक्षितत्वादित्यर्थ: ।

[3] आगमाभावनिश्चये ऽपि षष्ट्याब्दिको भोग: स्वत्वे प्रमाणं [4]अन्यायेनापि यद् भुक्तं पित्रा पूर्वतरैस्त्रिभिरित्यादिस्वरसादिति नव्या: । [5] तन्न - [6] अनागमं तु यो भुङ्क्त इत्यत्र संतानापेक्षयैकवचनमिति व्याचक्षाणेन पारिजातकृता बह्वब्दशतमपि पितापुत्रक्रमेण संतानेन भुज्यमाने ऽपि वस्तुनि भोगात् स्वत्वमनङ्गीकुर्वतास्य सुदूरमुत्सारितत्वादिति ।

[7] अथान्यभोगेन हान्यपवाद: ।

[8] तत्र बृहस्पति: -

490 भुक्तिस्त्रिपुरुषी सिध्येदपरेषां न संशय: ।
अनिवृत्ते सपिण्डत्वे सकुल्यानां न सिध्यति ॥[B 7.43]

491 अस्वामिना तु यद् भुक्तं गृहक्षेत्रापणादिकं ।

---

487 हि : B1 पि । 489[1] °पुत्रादि: : LCM2 पुत्रादिस् । 489[3] स्वत्वे : M1 स्वत्व । 489[4] °भिरित्यादि° : B2M1 भि: इत्यादि । 489[4] नव्या: : CM2 तु नव्या: । 490 सिध्येद् : B1 सिध्येत् ।

सुहृद्बन्धुसकुल्यस्य न तद्भोगेन हीयते ॥ [B 7.44]

492 विवाह्यश्रोत्रियैर्भुक्तं राज्ञामात्यैस्तथैव च ।
सुदीर्घेणापि कालेन तेषां सिध्यति तत्तु न ॥ [B 7.46]

[1]विवाह्यो जामाता ।

[2]मनुः -

493 आधिः सीमा बालधनं निक्षेपोपनिधिः स्त्रियः ।
राजस्वं श्रोत्रियस्वं च नोपभोगेन शाम्यति ॥ [M 8.149]

[1]बृहस्पतिः -

494 असक्तालसरोगार्तिबालभीतप्रवासिनां ।
शासनारूढमन्येन भुक्तं भुक्त्या न हीयते ॥ [B 7.47]

[1]शासनारूढं ताम्रपट्टादिलिखितं ।

[2]कात्यायनः -

495 न भोगं कल्पयेत् स्त्रीषु देवराजधनेषु च ।
बालश्रोत्रियवित्ते च प्राप्ते च पितृतः क्रमात् ॥ [K 330]

496 न स्त्रीणामुपभोगः स्यात् विना लेख्यं कथंचन ।
सुरश्रोत्रियराज्ञां तु तथा बालधने मतः ॥ [B 7.29]

[1]मनुः -

497 सम्प्रीत्या भुज्यमानानि न नश्यन्ति कदाचन ।
धेनुरुष्ट्रो वहन्नश्वो यश्च दम्यः प्रयुज्यते ॥ [M 8.146]

[1]दम्यः दमनार्थं प्रयुज्यते वृषभादिः ।

[2] कात्यायनः -

498 क्रयं शिल्पिषु निक्षिप्तं बन्धान्वाहितयाचितं ।
प्रसह्यमिहरन् मोहाद्धीनो दण्ड्यः स वै भवेत् ॥ [K ?]

[1] क्रीयतेऽनेनेति क्रयो मूल्यं ।

[2]याज्ञवल्क्यः -

---

494 असक्ता° : B1 अशक्ता। 494[1] °पट्टादि° : M1 पट्टकादि । 496 कथंचन : M1 कदाचन । 496 सुर° : B2 तथा । 496[1] मनुः : B2 om । 497

499 आध्यादीनां विहर्तारं धनिनो दापयेद्धनं ।
दण्डं च तत्समं राज्ञे शक्त्यपेक्ष्यमथापि वा ॥[Y 2.26]

[1]तत्समदण्डादामं शक्त्यनुसारेण दण्डयेत् ।

[2]एतेषां च भोगानामप्रमाणतया उक्तानामन्यथासिद्धौ तात्पर्यं ।

[3]अथ लिखितसाक्षिभुक्तीनां बलाबलं ।

[4]तत्र नारदः -

500 लिखितं बलवन्नित्यं जीवन्तस्त्वेव साक्षिणः ।
कालाभिहरणाद् भुक्तिरिति शास्त्रेषु निर्णयः ॥[N 1.75]

501 त्रिविधस्यास्य दृष्टस्य प्रमाणस्य यथाक्रमं ।
पूर्वं पूर्वं गुरु ज्ञेयं भुक्तिरेभ्यो गरीयसी ॥ [N 1.76]

[1]पूर्वं पूर्वमिति - भुक्तितः साक्षी ततो लिखितं गुर्वित्यर्थः । [2] भुक्तिरेभ्यो ऽल्पकालभुक्तिसाक्षिलेख्येभ्यः पंचाङ्गसम्पन्ना भुक्तिर्गरीयसीत्यर्थः । [3]भुक्तिराभ्यां गरीयसीति भवदेवे पाठः । [4]स तु सुगम एव ।

[5]इदं त्विह चिन्त्यते [6] यदयं शास्त्रीयो भोगो भोक्तुः स्वत्वजनको वा प्रमापको वा ।

[7]तत्र भवदेवः - [8]न तावदयं जनकः, [9]याजनादिवदस्य स्वत्वजनकत्वेनाश्रुतत्वात्। [10]नापि प्रमापकः । [11] तथा हि लिङ्गतया वा भोक्तुः स्वत्वमसौ प्रमापयेदनुपपन्नतया वा । [12]नाद्यः, [13] ईदृशभोगेन सह स्वत्वव्याप्तेर्ग्राहिकाभावात् । [14] किंचानेन प्रचीनस्वत्वस्य सत एव प्रमापणे ऽन्यायेनापि यद् भुक्तमित्यादिकं विरुध्येत ।[15] न हि स्वमन्यायेन भुज्यत इति ।[16] अत एव च न द्वितीयो ऽपि । [17] किंचेयमनुपपन्नता स्त्रीराजादिधनगोचरा नास्ति यतो न तत्र कदाचिदपि भोगः प्रमाणमिति । [18]तस्मादेवं वाच्यं [19]यदयं यथोक्तो भोगः पूर्वस्वामिनो भोक्त्रुद्देशेन त्यागात् स्वत्वध्वंसमर्थापयति । [20] न हि सम्भवति - [21] तन्न जहाति परिभोगं चेदृशं तस्मिन् वस्तुनि क्षमत इति । [22] किंच यद्धि यदुद्देशेन त्यज्यते

---

499 धनिनो : CM2 धनिने । 499[2] °तया उक्ता : B2 तयोक्ता । 501[1] ततो : B1 ततः। 501[9] °त्वेनाश्रुत : M1 त्वेन अश्रुत । 501[12] नाद्यः : M1 तत्र नाद्यः । 501[15] स्वम° : B2 स्वत्वम ।

तत्तेन परिगृहीतं तस्य स्वीभवति ।[23] यथा सर्वभूतोद्देशेन त्यक्तं तोयादीति नियमादिदमपि तत एव भोक्तुः स्वीभवति ।[24] स्त्रीराजादिधने तु नैवं,[25] भार्यायाः स्वत्वाविषयतया राजधनस्य चातिविस्तरतया तत्र त्यागस्यैवासम्भवात् ।

[26] भूम्यादौ विंशतिवार्षिको गवादौ दशवार्षिको भोगः पूर्वस्वामिनः स्वत्वध्वंसे प्रमाणमिति यत्कालवैषम्यं भूम्यादेर्महाफलत्वेनातिमहत्त्वास्पदत्वात्तत्र चिरकालेनैव स्वत्वहानिकल्पनात् ।[27] तथा द्रव्यान्तराणां चातथात्वादल्पकालेनापि स्वत्वहानिकल्पनाद्युक्तं ।[28] यच्च भूम्यादावेव कालवैषम्येन भोक्तुः स्वत्वजननं तदपि वचनबलादेव युक्तं[29] यथा तदेव हि जन्म पुत्रस्य पितृधने स्वत्वजनकं न तु पुत्र्या इति ।

[30] अत्र प्रदीपकृतः -[31] यत्र हि मत्कृत्येदानीं नात्र फलसम्भावना तदिदानीं तावत् पर एव भुङ्क्तां पश्चादेतत्सकाशात् सभोगां भुवं ग्रहीष्यामीत्यभिसंधाय भूस्वामी दामते तत्रास्ति विंशत्याब्दिको भोगो न तु स्वामिनस्तदुद्देशेन स्वभूत्याग इति व्यभिचारान्नायं भोगः पूर्वस्वामिनस्तु त्यागे प्रमाणं ।

[32] न चात्र पूर्वस्वामिना त्यागाभावप्रतिज्ञया दिव्यं कार्यं तथा च तद्भङ्गे त्यागनिर्णय इति वाच्यं ।[33] तथापि पूर्वभोगसिद्धस्य पूर्वपरिग्रहस्य त्यागानवधारणाकालीनत्वेन भोक्तुः स्वत्वाजनकतया तद्वैयर्थ्यात् ।[34] किंच भूस्वामी सचेताः किमिति वृथैव संजल्पात् ।[35] नात्र दृष्टमुद्देश्यं तदभावात्[36] नाप्यदृष्टं धर्मशास्त्रेतिकर्तव्यताविरहात् ।[37] महेच्छत्वसुशीलत्वदयालुत्वादिनापि त्यागासम्भवः ।[38] स त्यजन्नपि तैरेव दामत इत्यस्यापि सम्भवात् ।[39] नापि यदुद्देशेन यत्त्यज्यते तत्तस्य स्वमिति नियमः,[40] उद्देश्येनापरिगृहीते व्यभिचारात् ।

[41] अपि च त्यागात् भोक्तुः स्वत्वं स्वरूपमतो ज्ञानाद्वा ।[42] नाद्यः[43] अदृष्टचरत्वात्।[44] द्वितीये च ज्ञानं भोक्तुः स्वामिवचनादिना स्यात्।[45] तथा च तदुद्देशेन मयेदं त्यक्तमिति तत्स्वामिनस्तदभिसंधिपूर्वकाद्वचनात् तत्

---

501[27] स्वत्व॰: B1 om। 501[28] यच्च : B2 यत्तु। 501[31] ॰मीत्यमि॰: B1M1 मीति अभि LCM2 मि इत्यभि । 501[32] तथा: M1 तत्र । 501[33] भोक्तुः: B2 M1 भोक्तृ। 501[41] त्यागात् : B2LCM2 त्यागाद्। 501[44] ज्ञानं : M1 तज्ज्ञानं। 501[45] तदु॰ : B1LCM2 त्वदु। 501[45] ॰स्वामिनस् : B1CM2 स्वामिनः।

स्यात् [46]इदं च दानमेवेति [47]कृतमुपेक्षानुसरणेन ।
[48]न च यथोक्तक्षमयैव त्यागानुमानं, [49]अत्यक्तेऽपि सौशील्यादिना क्षमासम्भवात् । [50]न चैवं यथोक्तक्षमया भोक्तृस्वत्वानुमानमपि न स्यात्, [51]पूर्वस्वामिनस्तत्र स्वत्वेऽपि सौशील्यादिना तस्यान्यथासिद्धेरिति वाच्यं । [52]षष्ट्यब्दान् यावत् सौशील्यादिना क्षमासम्भवे हि तादृशभोगस्य भोक्तृस्वत्वप्रमापकत्वं स्मृत्युक्तं भज्यते । [53]तस्मात्तादृशो भोगो भोक्तुः स्वत्वे प्रमाणं । [54]तच्च पूर्वागमाद्धोत्पद्यतां स्वामिनो भोक्तुद्देशेन तद्वस्तुत्यागाद्वेत्यत्र न नोग्रह इति ।

[55]याज्ञवल्क्यः -

502 आगमस्तु कृतो येन सोऽभियुक्तस्तमुद्धरेत् ।
न तत्सुतस्तत्सुतो वा भुक्तिस्तत्र गरीयसी ॥[Y 2.28]

[1]यदागमे संशयो भवति तदार्जक एवागमं प्रमापयेत् । [2]तत्सुतस्य तु सागमा भुक्तिरेव प्रमाणमित्यर्थः ।

[3]यदि तु पूर्वमभियुक्तेनापि पित्रागमशुद्धिर्न कृता तदा पुत्रेणागमशुद्धिः कर्तव्यैव । [4]यदाह नारदः -

503 तथारूढविवादस्य प्रेतस्य व्यवहारिणः ।
पुत्रेण सोऽर्थः संशोध्यो न तं भोगो निवर्तयेत् ॥[N 1.93]

[1]तं विवादं भोगो भोगमात्रमागमं विना कृतं न निवर्तयेदित्यर्थः ।

[2]अथानुपभोगेनासिद्धिः ।

[3]तत्र याज्ञवल्क्यः -

504 आगमोऽपि बलं नैव भुक्तिस्तोकापि यत्र नो ॥[Y 2.27cd]

[1]आगमे विद्यमानेऽपि भुक्तिविरहात् तावत्कालं स्वत्वं न सिध्यतीत्यर्थः। [2]अत्र यत्रान्यमुद्दिश्य केनचित् किंचिद्दत्तं तत्रोद्देश्यस्य स्वीकारव्यंजकभोगाभावात् स्वत्वं न निश्चीयत इति न्याय एव मूलं ।
[3]केचित्त्वेवं व्याचक्षते - [4]यत्र वादिप्रतिवादिनो स्वस्वागमबलप्रवृत्तौ आगमयोश्च पूर्वापरभावो न निश्चीयते तत्र यस्य भुक्तिस्तस्यागमो बली-

---

501 [50] भोक्तृ° : M1 भोक्तुः । 502[2] तु : LCM2 om। 502[3] शुद्धिः : LCM2 शुद्धिश्च ।

यान् न त्वन्यस्येत्यर्थः ।

[5]नारदः -

505 विद्यमाने ऽपि लिखिते जीवत्स्वपि च साक्षिषु ।
विशेषतः स्थावरादि यन्न भुक्तं न तत् स्थिरं ॥ [N 1.77]

506 भुज्यमानान् परैरर्थान् यस्तान्मोहादुपेक्षते ।
समक्षं जीवतो ऽप्यस्य तान् भुक्तिः कुरुते वशे ॥ [N 1.78]

[1]न तत् स्थिरं चिरकालवर्तिस्वत्वव्यवस्थापकप्रमाणवन्न भवतीति यावत्।
[2]यः परेण भुज्यमानानर्थान् मोहादुपेक्षते तस्य भोक्तुः पार्श्वे भोगसम्बन्धेन धनान्तरं न लभ्यं भवति स्वयमेवोपेक्षणादित्यर्थः ।

[3]अत्रैव याज्ञवल्क्यः -

507 पश्यतो ऽब्रुवतो भूमेर्हानिर्विंशतिवार्षिकी ।
परेण भुज्यमानाया धनस्य दशवार्षिकी ॥ [Y 2.24]

[1]व्यासः -

508 उपेक्षिता यथा धेनुर्विना पालेन नश्यति ।
पश्यतो ऽन्यैस्तथा भुक्ता भूमिः कालेन हीयते ॥ [Vy 1.76]

509 वर्षाणि विंशतिं यस्य भूमिर्भुक्ता परैरिह ।
सति राज्ञि समर्थस्य तस्य सेह न सिध्यति ॥ [Vy 1.77]

[1]न सिध्यतीति तस्य सा हीयते तदीयत्वेन न निश्चीयते ।

[2]नारदः -

510 प्रत्यक्षपरिभोगात्तु स्वामिनो द्विदशाः समाः ।
आध्यादीन्यपि जीर्यन्ति स्त्रीनरेन्द्रधनादृते ॥ [N 1.82]

[1]द्विदशाः समाः विंशतिवर्षाणि । [2]आध्यादीन्यपीति वरं विषं भुङ्क्ष्वेतिवन्नेयं -

511 आधिः सीमा बालधनं निक्षेपोपनिधिः स्त्रियः ।
राजस्वं श्रोत्रियस्वं च नोपभोगेन शाम्यती- [N 1.81]

[1]त्यादिना नारदवचनेनाधेर्भोगजीर्णतानिषेधात् ।

---

505 च : M1 हि । 505 स्थावरादि : LCM2 स्थावराणां । 507 भूमेर्हानि॰: B1 भूमेः हानि । 510[1] समाः : B2 समा । 511 शाम्यतीत्यादिना : B2 शाम्यति इत्यादिना । 511[1] ॰वचनेनाधे॰ : B1 वचनेन आधे ।

[2] मनुः -

512 आधिश्चोपनिधिश्चोभौ न कालात्ययमर्हतः ।
अवहार्यौ भवेतां तौ दीर्घकालमवस्थितौ ॥ [M 8.145]

[1] आधिर्बन्धः । [2] उपनिधिः प्रीत्या भोगार्थं समर्पितक्षेत्रादि । [3] न कालात्ययमर्हतः मोक्षणकाले अवश्यं मोक्षणीयावित्यर्थः । [4] अत्र हेतुः - [5] अवहार्यावित्यादि । [6] तौ हि चिरकालावस्थितौ भोक्तुरेवावहार्यौ भवेतां भोक्ता कदाचिदपहरेदित्यर्थः ।

[7] बृहस्पतिः -

513 कक्थिभिश्चापरैर्द्रव्यं समक्षं यस्य दीयते ।
अन्यस्य भुंजतः पश्चान्न स तल्लब्धुमर्हति ॥ [B 7.40]

514 पश्यन्नन्यस्य ददतः क्षितिं यो न निवारयेत् ।
स्वामी सतापि लेख्येन पुनस्तां न समाप्नुयात् ॥ [B 7.41]

[1] तथा -

515 भूमेरभुक्तिर्लेख्यस्य यथाकालमदर्शनं ।
अस्मारणं साक्षिणां च स्वार्थहानिकराणि च ॥[B 7.66]

516 तस्माद्यत्नेन कर्तव्यं प्रमाणपरिपालनं ।
तेन कार्याणि सिध्यन्ति स्थावराणि चराणि च ॥[B 7.67]

[1] तथा च हानिवचनानि प्रमाणपरिपालनपराणीति सारं ।

## [2] अथ विच्छिन्नभोगनिर्णयः ।

[3] तत्र बृहस्पतिः -

517 छिन्नभोगे गृहक्षेत्रे संदिग्धं यत्र जायते ।
लेख्येन भोगविद्भिर्वा साक्षिभिस्तद्विभावयेत् ॥ [B 7.48]

518 नामाघाटागमं संख्यां दिग्भागं कालमेव च ।
भोगच्छेदनिमित्तं च ये विदुस्तेऽत्र साक्षिणः ॥ [B 7.49]

519 तदुत्पन्नाश्च सामन्ता ये स्युर्देशान्तरस्थिताः ।

---

513 कक्थिभिश्चा॰ : B2 कक्थिभिर्वा। 515 साक्षिणां च : B2 साक्षिणां तु । 517 गृह॰ : B1L गृहे । 518 नामा॰ : LCM2 नाम । 518 तेऽत्र: M1 CM2 तत्र ।

मौलास्तु ते समुद्दिष्टाः प्रष्टव्याः कार्यनिर्णये ॥ [B 7.50]

520 अदृष्टास्ते तु ये ब्रूयुः संदिग्धे समदृष्टयः ।
तत्प्रमाणं प्रकर्तव्यमेवं धर्मो न हीयते ॥ [B 7.51]

521 स्थावरेष्वेतदाख्यातं लाभभोगप्रसाधकं ।
प्रमाणहीनवादे तु निर्देश्या दैविकी क्रिया ॥ [B 7.52]

[1]संदिग्धं संदेहः । [2]नाम चोत्रादेः । [3]आघाटः सीमा । [4] आगमः स्वत्वहेतुः । [5] संख्या भूमेरेव । [6] दिग्भागो ऽपि तस्या एव । [7] काल आगमकालः । [8] प्रमाणहीनवादे दृष्टप्रमाणहीनवादे ।

[9] इति भुक्तिः ।

---

521 स्थावरेष्वेतदा° : LCM2 स्थावरेषु तदा। 521 दैविकी : CM2 दैवकी । 521[3] आघाटः : LCM2 घाटः। 521[6] तस्या एव : B2 तस्याः । 521[9] इति : B1B2M1 om ।

(521) [10] अथ युक्तिः ।

[11] तत्र बृहस्पतिः -

522 असाक्षिके चिरकृते पृच्छेदुत्तरसाक्षिणः ।
शपथान्वा प्रयुंजीत उपधां वा प्रयोजयेत् ॥[B 7.68]

[1] उपधा युक्तिः ।

[2]नारदः -

523 प्रमादाद्धनिनो यत्र न स्याल्लेख्यं न साक्षिणः ।
अर्थं चापह्नुते वादी तत्रोक्तस्त्रिविधो विधिः ॥ [N 1.235]

524 चोदना प्रतिकालं च युक्तिलेशस्तथैव च ।
तृतीयः शपथः प्रोक्तस्तैरेवं साधयेत् क्रमात् ॥[N 1.236]

525 अभीक्ष्णं चोद्यमानो ऽपि प्रतिहन्यान्न तद्वचः ।
त्रिचतुःपंचकृत्वो वा परतो ऽर्थं स दापयेत् ॥ [N 1.237]

[1] चोदना प्रतिकालं अस्वकं मे धनं देहीति वारंवारं प्रेरणा ।

[2] कात्यायनः -

526 श्राव्यमाणो ऽर्थिना यत्र यो ह्यर्थो न विघातितः ।
दानकाले ऽथवा तूष्णीं स्थितः सो ऽर्थोऽनुमोदितः ॥[K 144]

527 अर्थिनैवान्वितो यत्र विघातं न प्रयोजयेत् ।
त्रिचतुःपंचकृत्वो वा परतस्तद्दृणी भवेत् ॥ [K 336]

528 स्वामिना नृपतिर्विप्रं क्रमेणोक्तं प्रदापयेत् ।
ततो ऽन्यं दापयेत्पूर्वं सकृदुक्ताविघातिनं ॥ [K ?]

[1]स्वामिना उत्तमर्णेन उक्तं धनं मे देहीति याचितं विप्रमविघातिनं क्रमेण दापयेत् । [2] विप्रान्यं तु तादृशक्रमेणापीत्यर्थः । [3] असकृत्प्रार्थितमविहतं धनं विप्रो दाप्यः सकृत्प्रार्थितमप्यविहतमविप्रो दाप्य इत्यर्थ इत्यन्ये ।

[4]नारदः -

---

524 प्रोक्तस् : B2 प्रोक्तः । 527 °वान्वितो : B1 वार्थितो ।

529 चोदनाप्रतिघाते तु युक्तिलेशैस्तमन्वियात् ।
देशकालार्थसम्बन्धपरिमाणक्रियादिभिः ॥ [N 1.238]

[1] अस्यार्थः – [2]यदाधमर्णश्चोदनाप्रतिघातं करोति नाहं धारयामीति तदानुमानापरव्यपदेशाभिर्युक्तिभिर्निर्णयः कार्यस्[3]तद्यथा – यस्मिन् देशे यस्मिन् काले येन अर्थेन प्रयोजनेन उत्तमर्णेनर्णिकस्य ऋणग्रहणाभियोगः कृतः तत्र देशादौ तेन प्रयोजनेन तस्य ऋणग्रहणमसम्भावितं चेत्तदा युक्त्या निर्णयो भवति । [4] एवं यस्य शतसम्भावनापि नास्ति स यथैवमाह ममानेन सहस्रं गृहीतं तत्रापि परिमाणयुक्त्या भवति निर्णयः । [5] एवमधमर्णक्रियादयो ऽपि यत्र प्रतिमासं कलादानरूपाः प्रतीयन्ते तत्रापि युक्त्या निर्णीयते ।

[6] शपथस्त्वतो वक्ष्यते ।

[7] एवं नारदेन एकदेशविभावनेन सर्वस्यैव विवादविषयस्य यद्देयत्वमुक्तं –

530 अनेकार्थाभियुक्तेन सर्वार्थव्यपलापिना ।
विभावितैकदेशेन देयं तदपि युज्यत इति ॥ [N ?]

[1]तस्य यत्रैकभाजनस्थमनेकं सुवर्णरजतादिकं गृहीतं तत्रैकद्रव्यग्रहणविभावनया सकलमेव द्रव्यं देयं भवतीति न विषयः, [2]तत्राविभावितद्रव्यसत्त्वे प्रमाणाभावात् । [3] न ह्यभियोक्तृवचनमात्रात्तत्सिद्धिः, [4] मिथ्यात्वस्यापि सम्भवात् । [5] न च क्रियान्तरेण साक्ष्यादिनाभियोक्त्रा तदा तत्र तदवस्थानं ज्ञाप्यं, [6] तथा सति क्रियान्तरेणैव तन्निर्णयाद्युक्तेरप्रयोजकत्वापत्तेः । [7] किंतु यत्रैकग्रहणं तदितरग्रहणव्याप्यं भवति तद्विषयः । [8] यद्वा यथादिप्तानां मध्ये एकमपि विभावयसि तदा सकलमेव मया दातव्यमिति यत्र वादिनो ऽभ्युपगमः स तस्य विषयः ।

[9]नारदः –

531 असादिप्रत्ययास्त्वन्ये षड्विवादाः प्रकीर्तिताः ।

---

529 °घाते तु : B1 घातेषु । 529[1] कार्यस् : M1 कार्यः । 529[2] येन अर्थेन : B2M1 येनार्थेन । 529[2] उत्तमर्णेनर्णिकस्य : B1 उत्तमर्णेनाधमर्णकस्य । 530 °युक्तेन : B1 योगेषु । 530 युज्यत : B2 युज्यते । 530[5] तदा : B1 om । 530[8] मया : B2 om ।

लक्षणान्येव साक्षित्वे तेषामाहुर्मनीषिण: ॥ [N 1.172]

532 उल्काहस्तोऽग्निदो ज्ञेय: शस्त्रपाणिश्च घातक: ।
केशाकेशिगृहीतश्च युगपत् पारदारिक: ॥ [N 1.173]

533 कुद्दालपाणिर्विज्ञेय: सेतुभेत्ता समीपग: ।
तथा कुठारहस्तश्च वनच्छेत्ता प्रकीर्तित: ॥ [N 1.174]

534 प्रत्यक्षचिह्नैर्विज्ञेयो दण्डपारुष्यकृन्नर: ।
असाक्षिप्रत्यया ह्येते पारुष्ये तु परीक्षणं ॥ [N 1.175]

[1]साक्षित्वे साक्षिस्थाने । [2]साक्षिस्थानत्वमेतेषामविनाभावेन । [3]प्रत्यक्षचिह्नै: रुधिराक्तखड्गादिभि: । [4]पारुष्ये वाक्पारुष्ये ।

[5]कात्यायन: -

535 दानं प्रज्ञापनाभेद: सम्प्रयोगक्रिया च या ।
वित्तापनयनं चैव हेतवो हि विभावका: ॥ [K 337]

[1]दानं उत्कोचदानं । [2]प्रज्ञापनाभेद: येन चिह्नेन ज्ञायते तदन्यथाकरणं । [3]सम्प्रयोगक्रिया विषयान्तरे तदधिकलोभोत्पादनं ।

[4]शङ्ख: -

536 केशाकेशिग्रहणात् पारदारिक: उल्काहस्तोऽग्निद: शस्त्रपा-
537 णिर्घातिको लोप्त्रहस्तश्चौर: । क्षेपेऽष्टशतं यथास्वरूपं वा रुधिरस्रावे प्रहारे चाभिव्यक्ते न साक्षिण: प्रत्यक्षचिह्नाभिव्यक्ते चाष्टशतं ॥ [ŚL 328 + ?]

[1]क्षेपे पूर्वोक्तलिङ्गनिश्चितप्रहारापह्नवे । [2]अष्टशतं पणानां दण्ड इति शेष: ।

[3]एताश्च युक्तयो दुरवधारणानन्यथासिद्धिमूलकानुमानरूपतया न सर्वसाधारण्य: किंत्वतिनिपुणस्थेयमात्रविश्रान्ता। [4]अयमेव च प्रत्यक्षनिर्णयोऽप्युच्यत इति ।

---

536 लोप्त्र° : B1B2 लोष्ट्र । 537[4] च : B1 हि ।

(537) [5] अथ दिव्यानि ।

[6] तत्र नारदः -

538 युक्तिष्वप्यसमर्थासु शपथैरेनमर्दयेत् ।
अर्थकालबलापेक्षामग्न्यम्बुसुकृतादिभिः ॥ [N 1.239]

539 घटोऽग्निरुदकं चैव विषं कोशश्च पंचमः ।
उक्तान्येतानि दिव्यानि विशुद्ध्यर्थं महात्मभिः ॥ [N 1.252]

540 संदिग्धेष्वभियुक्तानां परीक्षार्थं महात्मनां ।
प्रोक्तानि नारदेनेह सत्यानृतविशुद्धये ॥ [N 1.253]

[1] अर्दयेत् पीडयेत् । [2] अग्नीति अग्निर्मे नोपस्थास्यति जलं मामपकर्षयिष्यति इत्यग्निजलयोर्हस्तप्रक्षेपः ।[3] सुकृतं मे नङ्क्ष्यतीत्यादिः शपथः ।

[4]नन्वग्न्यादिकमिह दिव्यं ग्राह्यं तस्य शपथान्यत्वादिति वक्ष्यते ।

[5]नन्वन्यान्यपि दिव्यानि बृहस्पतिनोक्तानि । [6] यदाह -

541 घटोऽग्निरुदकं चैव विषं कोशश्च पंचमः ।
षष्ठं च तण्डुलाः प्रोक्तं सप्तमं तप्तमाषकं ॥ [B 8.3]

542 अष्टमं फालमित्युक्तं धर्मजं नवमं भवेत् ।
दिव्यान्येतानि सर्वाणि निर्दिष्टानि स्वयम्भुवा ॥ [B 8.4]

[1] तथा -

543 अहमुद्देशतो वच्मि संदिग्धार्थविशुद्धये ।
देशकालार्थसंख्याभिः संयुक्तान्यनुपूर्वशः ॥ [B 8.5cdef]

544 अपराधानुरूपेण साध्वसाधुविवक्षया ।
शास्त्रोक्तेनैव विधिना प्रदातव्यानि नान्यथा ॥ [B 8.6]

[1] कोशपानं स्वप्रसृतित्रयमितत्रिशूलादिस्नपनपानं [2]सत्यं किंतु याज्ञवल्क्येन प्रतिविहितं । [3]यदाह -

---

538 शपथैरेन॰ : B2LCM2 शपथैरेव । 541 प्रोक्तं : LCM2 प्रोक्ताः । 541 ॰माषकं : B1B2माषकः । 542[1] तथा : B1CM2 om । 544[1] स्व॰ :LCM2 om । 544[1] ॰स्नपन॰: B1 स्नपनपयः(?) M1 स्नान । 544[3] यदाह : LCM2 om ।

545 तुलाऽग्न्यापो विषं चैव दिव्यानीह विशुद्धये ।
महाभियोगेष्वेतानि शीर्षकस्थे ऽभियोक्तरि ॥ [Y 2.95]

[1] तथा च एतानि महाभियोगेष्वेव नान्यत्रेति नियम्यते । [2] न पुनरिमान्येव दिव्यानीति । [3] महाभियोगे ऽपि न सर्वत्र किंतु शीर्षकस्थे ऽभियोक्तरि । [4] शीर्षं शिरः तच्च दिव्यकर्तुर्जयपदो स्वदण्डस्वीकारः ।

546 तुलाधारणविद्वद्भिरभियुक्तस्तुलास्थितः ।
प्रतिमानसमीभूतो लेख्यं कृत्वावधारितः ॥ [Y 2.100]

547 त्वं तुले सत्यधामासि पुरा देवैर्विनिर्मिता ।
तत्सत्यं वद कल्याणि संशयान्मां विमोचय ॥ [Y 2.101]

548 यद्यस्मिन् पापकृन्मातस्ततो मां त्वमधो नय ।
शुद्धश्चेद् गमयोर्ध्वं मां तुलामित्यभिमन्त्रयेत् ॥ [Y 2.102]

549 तुलितो यदि वर्धेत विशुद्धः स्यान्न संशयः ।
समो वा हीयमानो वा न विशुद्धो भवेन्नरः ॥ [N 1.283]

[1] पितामहः -

550 चतुर्हस्ता तुला कार्या पादौ कार्यौ तथाविधौ ।
अन्तरं तु तयोर्हस्तौ भवेदध्यर्धमेव वा ॥ [Pi 87]

[1] स्मृतिसमुच्चये तु -

551 त्वमेव घट जानीषे न विदुर्यानि मानवाः । [Vi 10.10cd = Pi 102ab]
व्यवहाराभिशस्तो ऽयं मानुषस्तोल्यते त्वयि । [Vi 10.11ab = Pi 102cd]

552 तदेनं संशयादस्माद्धर्मतस्त्रातुमर्हसि ॥ [Vi 10.11cd = Pi 103]

553 ब्रह्मघ्नो ये स्मृता लोका ये लोकाः कूटसाक्षिणः ।
तुलाधारस्य ते लोकास्तुलां धारयतो मृषा ॥ [Vi 10.9]

[1] व्यासः -

554 अधोगतिर्न विशुद्धः शुद्ध ऊर्ध्वगतिः सदा ।
समो ऽपि न विशुद्धः स्यात् एषा शुद्धिरुदाहृता ॥ [Vy 2.17]

555 कक्षाछेदे तुलाभङ्गे घटकर्कटयोस्तथा ।

---

545[3] ऽपि : B2 हि । 548 यद्यस्मिन् : B1 यद्यस्मि । 553 लोका : LCM2 लोकाः । 554 स्यात् : B2LCM2 स्याद् ।

रज्जुच्छेदे ऽक्षामङ्गे च दद्याच्छुद्धिं पुनः पुनः ।। [Vy 2.19]

[1] तुलेति - अधिवासनदिने तुलितो ऽभिशस्तः कृतोपवासादिरुत्तरदिने प्रातरभिमन्त्र्य तुलनीयो यद्यूर्ध्वगः तदा जयी नो चेद् भङ्गीति वर्तुलार्थः ।

556 करौ विमृदितव्रीहीर्लक्षयित्वा ततो न्यसेत् ।
सप्ताश्वत्थस्य पत्त्राणि तावत्सूत्रेण वेष्टयेत् ।। [Y 2.103]

557 शम्यक्षतं तथा दूर्वां दत्त्वा पत्त्रेषु विन्यसेत् ।। [Y ?]

558 त्वमग्ने सर्वभूतानामन्तश्चरसि पावक ।
साक्षिवत् पुण्यपापेभ्यो ब्रूहि सत्यं करे मम ।। [Y 2.104]

559 तस्येत्युक्तवतो लोहं पंचाशत्पलिकं समं ।
अग्निवर्णं न्यसेत् पिण्डं हस्तयोरुभयोरपि ।। [Y 2.105]

560 स तमादाय सप्तैव मण्डलानि शनैर्व्रजेत् ।
षोडशाङ्गुलकं ज्ञेयं मण्डलं तावदन्तरं ।। [Y 2.106]

561 मुक्ताग्निर्मृदितव्रीहिरदग्धः शुद्धिमाप्नुयात् ।
अन्तरा पतिते पिण्डे संदेहे वा पुनर्हरेत् ।। [Y 2.107]

562 अग्निवर्णमियं पिण्डं सस्फुलिङ्गं सुरक्षितं ।
पंचाशत्पलिकं भूयः कारयित्वा शुचिर्द्विजः ।। [N 1.289]

563 तृतीयतापे तप्यन्तं ब्रूयात् सत्यपुरस्कृतः ।
शृण्विमं मानवं धर्मं लोकपालैरधिष्ठितं ।। [N 1.290]

564 त्वमग्ने सर्वभूतानामन्तश्चरसि साक्षिवत् ।
त्वमेवाग्ने विजानीषे न विदुर्यानि मानवाः ।। [Vi 11.11 = Pi 126]

565 व्यवहाराभिशस्तो ऽयं मानवः शुद्धिमिच्छति ।
तदेनं संशयादस्माद्धर्मतस्त्रातुमर्हसि ।। [Vi 11.12 = Pi 127]

[1] पितामहः -

---

555[1] °गः : B2LCM2 गस् । 557 शम्य° : B1 शाल्य । 561 मुक्ताग्निर्मृ° : LCM2 मुक्त्वाग्निं मृ । 562 °वर्णमियं : B1 वर्णमयः । 562 सुरक्षितं : B1 सुरंजितं । 562 शुचिर्द्विजः : LCM2 ततो द्विजः । 565[1] पितामहः : B2 व्यासः ।

566 त्वरमाणो न गच्छेत्तु स्वस्थो गच्छेच्छनैः शनैः ।
न मण्डलमतिक्रामेन्नान्तरा स्थापयेत्पदं ॥[Pi 129]
567 अष्टमं मण्डलं गत्वा नवमे निदिपेद् बुधः ॥[Pi 130ab]

[1] याज्ञवल्क्यः -

568 प्रस्खलत्यभियुक्तश्चेत् स्थानादन्यद्दाह चेत् ।
न तं दग्धं विदुर्देवास्तस्य भूयोऽपि दापयेत् ॥[K 441]

569 ततः शुद्धस्तयोः प्रास्येद् व्रीहीनथ यवानपि ।[Pi 130cd]
570 निर्विशेषेण चैषां तु हस्ताभ्यां मर्दने कृते ।
निर्विकारे दिनस्यान्ते शुद्धिं तस्य विनिर्दिशेत् ॥ [Pi 131]

[1] विष्णुः -

571 यो हस्तयोः क्वचिद्दग्धस्तमशुद्धं विनिर्दिशेत् ।
न दग्धः सर्वथा यस्तु स विशुद्धो भवेन्नरः ॥ [Vi 11.8]

[1]पूर्वदिने कृतोपवासाधिवासनादिरभिशस्त उत्तरदिने प्रथममण्डले स्थितो हस्तौ परीक्ष्य तयोर्न्यस्ताश्वत्थसप्तपत्त्रयोस्तावत्सूत्रवेष्टितयोर्यवदूर्वाशमीजुषोर्न्यस्तलोहयोराद्यमण्डले ततः क्रमेण मण्डलेषु षट्सु पादौ दत्त्वा अष्टमे स्थितो नवमे लोहं दिपेत् । [2] मण्डलातिक्रमादिसंशये पुनराहरेदिति समुदायार्थः ।

572 सत्येन माभिरक्ष त्वं वरुणेत्यभिगाय कं ।
नाभिदघ्नोदकस्थस्य गृहीत्वोरुं जलं विशेत् ॥[Y 2.108]
573 समकालमिषुं मुक्तमानीयान्यो जवी नरः ।
गते तस्मिन्निमग्नाङ्गं पश्येच्छेच्छुद्धिमाप्नुयात् ॥[Y 2.109]

574 अन्यथा न विशुद्धः स्यादेकाङ्गस्यापि दर्शनात् ।
स्थानाद्वान्यत्र गमनाद्यस्मिन् पूर्वं निवेशयेत् ॥[N 1.312 = Pi 145]

[1] सत्येनेति -

---

566 °क्रामेन् : B2M1 क्रामेत् । 568 °न्यद्दाह चेत् : B1 न्यत्तु दाहयेत् M: न्यत्र दह्यते । 571[1] दत्त्वा अष्टमे : B2 दत्त्वाऽष्टमे । 571[2] समुदायार्थः : B1 समुच्चयार्थः । 572 सत्येन : M1 अथ जलः (?) सत्येन । 574 निवेशयेत् : B2 निवेशितः ।

575 त्वमम्भ: सर्वभूतानामन्तश्चरसि साक्षिवत् ।
त्वमेवाम्भो विजानीषे न विदुर्यानि मानवा: ॥[Vi 12.7]

576 व्यवहाराभिशस्तोऽयं मानुषस्त्वयि मज्जति ।
तदेनं संशयादस्माद्धर्मतस्त्रातुमर्हसि ॥[Vi 12.8]

[1]तथा -

577 मध्यमं शरमादाय पुरुषोऽन्यस्तथाविध: ।
प्रत्यागच्छेत्तु वेगेन यत: स पुरुषो धृत: ॥[N 1.310]

578 आगतस्तु शरग्राही न पश्यति यदा जले ।
अन्तर्जलगतं सम्यक् तदा शुद्धिं विनिर्दिशेत् ॥[N 1.311 = Pi 144]

579 आनीते मध्यमे बाणे मग्नाङ्ग: शुचितामियात् ॥[B 8.61ab]

[1]कात्यायन: -

580 शिरोमात्रं तु दृश्येत न कर्णौ नापि नासिका ।
अप्सु प्रवेशने यस्य शुद्धं तमपि निर्दिशेत् ॥[K 444]

581 निमज्योत्प्लवते यस्तु दृष्टश्चेत् प्राणिना नर: ।
पुनस्तत्र निमज्योऽसावङ्गचिह्नविभावित: ॥[K 445]

[1]नाभिमात्रस्थिरजलस्थस्य ऊरू धृत्वाभिशस्तो मज्जयेत् । [2]तदैव बलवानिषुं क्षिपेत् तं च बलवानन्य आनयेत् । [3]तदभ्यन्तर एव यदि मग्न: सकल एकाङ्गेनापि वा उन्मज्जयेत् पूर्वस्थानं वा त्यजेत् तदा मङ्गीनो चेन्नेत्यर्थ: ।

582 त्वं विष ब्रह्मण: पुत्र: सत्यधर्मव्यवस्थित: ।
त्रायस्वास्मानभिशापात् सत्येन भव मेऽमृतं ॥ [Y 2.110]

583 एवमुक्त्वा विषं शार्ङ्गं भक्षयेद्धिमशैलजं ।
यस्य रोगैर्विना जीर्णं शुद्धिं तस्य विनिर्दिशेत् ॥ [Y 2.111]

[1]त्वमिति - शार्ङ्गनामकं विषं यथाविधिखादितमविकारि चेत्तदाभिशस्तो जयीत्यर्थ: ।

---

581 निमज्यो : B1 नियोज्यो । 581[1] °स्थस्य : LCM2 स्थितस्य । 582 त्वं : M1 अथ विष:(?) त्वं। 583[1] जयीत्यर्थ: : M1 जयीत्यर्थ: इति विषं अथ कोश: ।

[2]कोशपानमाह देवानित्यादि सुगमं -

584 देवानुग्रान् समभ्यर्च्य तत्स्नानोदकमाहरेत् ।
संश्राव्य पाययेत्तस्माज्जलात्तु प्रसृतित्रयं ॥ [Y 2.112]

585 आ चतुर्दशकादह्नो यस्य नो राजदैवकं ।
व्यसनं जायते घोरं स शुद्धः स्यान्न संशयः ॥ [Y 2.113]

[1]पितामहः -

586 शिरोवादिविहीनानि दिव्यानि परिवर्जयेत् ।
चत्वारि तु घटादीनि कोशश्चैवाशिराः स्मृतः ॥ [Pi 38]

[1]तथा -

587 न कश्चिदभियोक्तारं दिव्येन विनियोजयेत् ।
अभियुक्ताय दातव्यं दिव्यं दिव्यविशारदैः ॥ [K 244=411]

[1]नृपाज्ञायामत्रापि न शिरोऽपेक्षा इत्याह नारदः -

588 शिरोऽवस्थायिनि नरे अभियोक्तर्युपस्थिते ।
दिव्यप्रदानमुदितमन्यत्र नृपशासनात् ॥ [N 1.269]

[1]याज्ञवल्क्यः -

589 रुच्या वान्यतरः कुर्यादितरो वर्तयेच्छिरः ।
विनापि शीर्षकं कुर्यात् नृपद्रोहे च पातके ॥ [Y 2.96]

[1]अभियोक्त्रभियुक्तयोर्मिथः सम्प्रतिपत्त्याभियोक्तैव वा कुर्यात्, [2]दिव्यरूपप्रमाणस्य भावाभावाविशेषगोचरत्वात् ।

[3]कालिकापुराणे -

590 परदाराभिशापे च चौर्यागम्यागमेषु च ।
महापातकशस्तेषु स्याद्दिव्यं नृपशासने ॥

591 विप्रतिपत्तौ विवादे पणस्य स्थापने कृते ।
तत्रैव स्थापयेद्दिव्यं शिरःपूर्वं महीपतिः ॥

592 परदाराभिगमने बहवो यत्र वादिनः ।

---

583[2] देवानित्यादि सुगमं : B2LCM2 after Y2.112 । 586[1] तथा : B1 om । 587 दिव्येन वि० : B1 पुनर्दिव्ये । 589 कुर्यात् : B2CM2 कुर्यान् । 590 °शस्तेषु : B1 शस्ते च ।

शिरोहीनं भवेद्दिव्यं आत्मसंशुद्धिकारणात् ॥
[1]विप्रतिपत्तौ परदाराभिशापविषयायां । [2]विवादे ऋणादौ । [3]पर-
दाराभिगमन इति चौर्यादीनामप्युपलक्षणं ।

[4]विष्णुः -

593 राजद्रोहसाहसे च विना शीर्षप्रवर्तनात् ॥ [Vi 9.22]

[1]पितामहः -

594 राजभिः शङ्कितानां च निर्दिष्टानां च दस्युभिः ।
आत्मशुद्धिपराणां च दिव्यं देयं शिरो विना ॥ [Pi ?]

[1]नारदः -

595 अशिरांसि च दिव्यानि राजभृत्येषु दापयेत् ॥ [N 1.270ab]

[1]बृहस्पतिः -

596 स्नेहात् क्रोधात् लोभतो वा भेदमायान्ति साक्षिणः ।
विधिदृष्टस्य दिव्यस्य न भेदो जायते क्वचित् ॥ [B 8.14]

[1]पितामहः -

597 प्रत्यक्षं दापयेद्दिव्यं राजा वाधिकृतोऽपि वा ।
ब्राह्मणानां श्रुतवतां प्रकृतीनां तथैव च ॥ [Pi 51]
[1]ब्राह्मणानां प्रकृतीनां च दिव्यं प्रत्यक्षं दापयेत् ।

[2]विष्णुकात्यायनौ -

598 सचेलस्नातमाहूय सूर्योदय उपोषितं ।
कारयेत् सर्वदिव्यानि नृपब्राह्मणसंनिधौ ॥ [Vi 9.33 = K ?]
[1]पूर्वेद्युरुपोषितं सचेलस्नातं दिव्यकारिणं उदिते सूर्ये नृपस्य सभ्यानां च
ब्राह्मणानां संनिधौ सर्वाणि दिव्यानि कारयेत् प्राड्विवाकः ।

[2]पितामहः -

599 त्रिरात्रोपोषिताय वैकरात्रोपोषिताय वा ।

---

592 आत्मसंशुद्धि° : LCM2 आत्मनः शुद्धि ।596 क्रोधात् : B2 क्रोधाल् ।
597[1] विष्णु° :LCM2 अत्र विष्णु ।

नित्यं दिव्यानि देयानि शुचये चार्द्रवाससे ॥ [Pi 53]

[1]अयं चोपवासस्य त्रिरात्रैकरात्रिविकल्प: शक्त्यपेक्षया महाभियोगाल्पा-भियोगापेक्षया व्यवस्थित: ।

[2]तथा -

600 दिव्येषु सर्वकार्याणि प्राड्विवाक: समाचरेत् ।
अध्वरेषु यथाध्वर्यु: सोपवासो नृपाज्ञया ॥ [Pi 54]

[1] अयं च प्राड्विवाकस्योपवासो दिव्याङ्गदेवपूजाधिकारित्वपक्षे ।

[2] अत्र यद्यपि सूर्योदय इत्यविशेषेणोक्तं तथापि शिष्टाचाराद्रविवारा-दर: ।

[3] तथा -

601 पूर्वाह्णे ऽग्निपरीक्षा स्यात् पूर्वाह्णे तु घटो भवेत् ।
मध्याह्णे तु जलं देयं धर्मतत्त्वमभीप्सिता ॥ [Pi 45]

602 दिवसस्य तु पूर्वाह्णे कोशशुद्धिर्विधीयते ।
रात्रौ तु पश्चिमे यामे विषं देयं सुशीतले ॥ [Pi 46]

[1] अनुक्तवेलाविशेषाणां तु तण्डुलादीनां पूर्वाह्ण एव दानं -

603 पूर्वाह्णे सर्वदिव्यानां प्रदानं परिकीर्तितमिति [N 1.268cd]

[1] नारदस्मृते: ।

[2] दिव्यानां देशमाह कात्यायन: -

604 इन्द्रस्थाने ऽभिशस्तानां महापातकिनां नृणां ।
नृपद्रोहप्रवृत्तानां राजद्वारे प्रयोजयेत् ॥ [K 434]

605 प्रतिलोमप्रभूतानां दिव्यं देयं चतुष्पथे ।
अतो ऽन्येषु च कार्येषु सभास्थाने विदुर्बुधा: ॥ [K 435]

[1] इन्द्रस्थानमिन्द्रध्वजस्थानं ।

---

599 दिव्यानि देयानि : B2L देयानि दिव्यानि । 600[1] °पूजाधिकारि° : M1 पूजाकारि । 601 °तत्त्व° : B1 सत्व । 602 पूर्वाह्णे : B1 पूर्वार्द्धे । 605 °प्रभूतानां : B2 प्रवृत्तानां M1 प्रसूतानां । 605 चतुष्पथे : LCM2 चतु:-पथे ।

[2] <u>बृहस्पतिः</u> -

606 यथोक्तविधिना देयं दिव्यं दिव्यविशारदैः ।
अयथोक्तप्रदत्तं तु न शक्तं साध्यसाधने ॥ [B 8.15]

607 अदेशकालदत्तानि बहिर्वादिकृतानि च ।
व्यभिचारं सदा त्वेवं कुर्वन्तीह न संशयः ॥ [B 8.16]

[1] बहिर्वादिकृतं अभियोक्तारं विना कृतं । [2] एतच्च प्रायिकं, [3] आत्मशुद्धिपराणामभियोक्तारं विनापि दिव्यविधानात् ।

[4] <u>कात्यायनः</u> -

608 साधयेत्तु पुनः साध्यं व्याघाते साधनस्य हि ।
दत्तान्यपि यथोक्तानि राजा दिव्यानि वर्जयेत् ।
मूर्खैर्लुब्धैश्च दुष्टैश्च पुनर्देयानि तानि वै ॥ [K 438]

[1] कथमपि पूर्वदिव्याप्रामाण्यशङ्कायां पुनर्दिव्यं देयमित्यर्थः ।

[2] अथ दिव्यविशेषे कालविशेषमाह <u>पितामहः</u> -

609 यो यस्य विहितः कालो विधिर्यस्य च यो यथा ।
तं प्रवक्ष्यामि तत्त्वेन वादिनश्च बलाबलं ॥ [Pi 32]

610 चैत्रो मार्गशिराश्चैव वैशाखश्च तथैव हि ।
एते साधारणा मासा दिव्यानामविरोधिनः ॥ [Pi 33]

611 घटः सर्वर्तुकः प्रोक्तो वाते वाति विवर्जयेत् । [Pi 34]

612 अग्निः शिशिरहेमन्तवर्षासु परिकीर्तितः ।
शरद्ग्रीष्मे तु सलिलं हेमन्ते शिशिरे विषं ॥ [Pi 35]

[1] <u>नारदः</u> -

613 न शीते तोयशुद्धिः स्यान्नोष्णकालेऽग्निशोधनं ।
न प्रावृषि विषं दद्यात् प्रवाते न तुलां नृपः ॥ [N 1.259]

[1] अत्र शीतशब्देन हेमन्तशिशिरवर्षाणां ग्रहणं । [2] उष्णशब्देन शरद्ग्रीष्मयोर्ग्रहणं ।

[3] <u>ज्योतिषे</u> -

---

606 °दत्तं : M1 दानात् LCM2 दानं । 607[1] अभियोक्तारं : LCM2 यत्तु अभियोक्तारं । 607 [2] एतच्च : LCM2 एतत् । 608 साधयेत् : B1 साध्यते । 608 देयमित्यर्थः : LCM2 देयं । 612 तु : LCM2 षु ।

614 सिंहस्थे मकरस्थे च जीवे चास्तमिते भृगौ ।
मलमासे न कर्तव्या परीक्षा जयकाङ्क्षिणां ॥
615 रविशुद्धौ गुरोश्चैव न शुक्रे ऽस्तंगते पुनः ।
सिंहस्थे च रवौ नैव परीक्षा शस्यते बुधैः ॥
616 नाष्टम्यां न चतुर्दश्यां प्रायश्चित्तं परीक्षणं ।
न परीक्षाधिवासश्च शनिभौमदिने भवेत् ॥

[1] अथ वर्णविशेषे दिव्यविशेषमाह नारदः -

617 ब्राह्मणस्य घटो देयः क्षत्रियस्य हुताशनः ।[N 1.334cd]
618 वैश्यस्य सलिलं देयं शूद्रस्य विषमेव च ॥[N 1.335ab]
619 साधारणः समस्तानां कोशः प्रोक्तो मनीषिभिः ।
विषवर्जं ब्राह्मणस्य सर्वेषां वा तुला स्मृता ॥ [NQ 6.6]

[1] कात्यायनः -

620 राजन्ये ऽग्निं घटं विप्रे वैश्ये तोयं नियोजयेत् ।
सर्वेषु सर्वदिव्यं वा विषवर्जं द्विजोत्तमे ॥[K 422]

[1] याज्ञवल्क्यः -

621 तुला स्त्रीबालवृद्धार्तपङ्गुब्राह्मणरोगिणां ।
अग्निर्जलं वा शूद्रस्य यवाः सप्त विषस्य वा ॥ [Y 2.98]

[1] कात्यायनः -

622 गोरक्षकान् वाणिजकान् तथा कारुकुशीलवान् ।
प्रेष्यान् वार्द्धुषिकांश्चैव ग्राहयेच्छूद्रवद् द्विजान् ॥ [K 423]

[1] नारदः -

623 क्लीबातुरान् सत्त्वहीनान् परितापार्दितान्नरान् ।
बालवृद्धातुरादींश्च परीक्षेत घटे सदा ॥ [NQ 6.8]
624 नार्तानां तोयशुद्धिः स्यान्न विषं पित्तरोगिणां ।
श्वित्र्यन्धकुनखादीनां नाग्निकार्यं विधीयते ॥ [N 1.255]

---

614 °काङ्क्षिणां : B2M1 कांक्षिणा । 616 प्रायश्चित्तं परीक्षणं : B2 प्रायश्चित्तपरीक्षणे ।616 °धिवासश्च : B1 विधानं च LCM2 विवादश्च । 624 स्यान् : B2M1 स्यात् । 624 श्वित्र्यन्ध° : LCM2 मूकान्ध ।

625 न मज्जनीयं स्त्रीबालं धर्मशास्त्रविशारदैः ।
रोगिणो ये च वृद्धाः स्युः पुमांसो ये च दुर्बलाः ॥[N 1.313]

626 निरुत्साहान् व्याधिजुष्टान् नार्तांस्तोये निमज्जयेत् ।
सद्यो म्रियन्ते मज्जन्तः स्वल्पप्राणा हि ते स्मृताः ॥ [N 1.314]

627 साहसेऽप्यागतानेतान्नैव तोये निमज्जयेत् ।
न वापि हारयेदग्निं न विषेण विशोधयेत् ॥ [N 1.315]

[1]कात्यायनः -

628 न लोहशिल्पिनामग्निं सलिलं नाम्बुसेविनां ।
मन्त्रयोगविदां चैव विषं दद्यात्तु न क्वचित् ।[K 424abcd]

629 दिव्यं तु वर्जयेन्नित्यमार्तानां तु गदेर्नृणां । [K ?]

630 तण्डुले न नियुंजीत व्रतिनं मुखरोगिणं ॥ [K 424ef]

[1]व्रतिनं तण्डुलाभक्षणव्रतवन्तं ।

[2]विष्णुः -

631-633 न कुष्ठ्यसमर्थलोहकराणामग्निर्देयः । शरद्ग्रीष्मयोः । न कुष्ठि-
634.635 पैत्तिकब्राह्मणानां विषं देयं । प्रावृषि च । न श्लेष्मव्याध्य-
636 र्दितानां भीरूणां श्वासकासिनामम्बुजीविनामुदकं । हेमन्तशिशि-
637.638 रयोश्च । न नास्तिकेभ्यः कोशो न देशे व्याधिमरकोपसृष्टे
च ॥ [Vi 9.25-32]

[1]पितामहः -

639 मद्यपस्त्रीव्यसनिनां कितवानां तथैव च ।
कोशः प्राज्ञैर्न दातव्यो ये च नास्तिकवृत्तयः ॥[Pi 43]

[1]कात्यायनः -

640 देशकालाविरोधे तु यथायुक्तं प्रकल्पयेत् ।
अन्येन हारयेद्दिव्यं विधिरेष विपर्यये ॥ [K 436]

[1]अन्येन प्रतिनिधिना । [2]हारयेत् कारयेत्। [3]विपर्यये अभियुक्तस्यासामर्थ्ये ।

---

627 विषेण वि° : LCM2 विषेणैव । 628 °योग° : LCM2 वेद । 628 दद्यात्तु न क्वचित् : B2 दद्यान्न कुत्रचित् । 639 दातव्यो : B2 दातव्यः। 640[3] अभि° : B2 भि ।

[4]नारदः -

641 सव्रतानां कृशार्तानां व्याधितानां तपस्विनां ।
स्त्रीणां च न भवेद्दिव्यं यदि धर्मस्त्ववेक्ष्यते ॥ [N 1.256]

[1]कात्यायनः -

642 मातापितृद्विजगुरुबालस्त्रीराजघातिनां ।
महापातकयुक्तानां नास्तिकानां विशेषतः ॥ [K 427]

643 लिङ्गिनां प्रमदानां च मन्त्रयोगक्रियाविदां ।
वर्णसंकरजातानां पापाभ्यासप्रवर्तिनां ॥ [K 428]

644 एतेष्वेवाभियोगेषु निन्द्येष्वेव प्रयत्नतः ।
दिव्यं प्रकल्पयेन्नैव राजा धर्मपरायणः ॥ [K 429]

645 एतैरेवाभियुक्तानां साधूनां दिव्यमर्हति ।
नेच्छन्ति साधवो यत्र तत्र साध्यं स्वकैर्नरैः ॥ [K 430]

646 महापातकयुक्तेषु नास्तिकेषु विशेषतः ।
न देयं तेषु दिव्यं तु पापाभ्यासरते भृगुः ॥ [K 431]

647 येषु पापेषु दिव्यानि प्रतिषिद्धानि यत्नतः ।
भावयेत् सज्जनैस्तानि नाभिशस्तं त्यजेन्नृपः ॥ [K 432]

[1]अवष्टम्भे विशेषमाह पितामहः -

648 अवष्टम्भाभियुक्तानां घटादीनि तु दापयेत् ।
तण्डुलाश्चैव कोशश्च शङ्कास्वेतौ नियोजयेत् ॥ [Pi 36]

[1]अवष्टम्भोऽत्र निश्चयः ।

[2]तथा -

649 चौर्यशङ्काभियुक्तानां तप्तमाषो विधीयते ॥ [Pi 169cd]

[1]कात्यायनः -

650 शङ्काविश्वाससंधाने विवादे ऋक्थिनां सदा ।
क्रियासमूहकर्तृत्वे कोशमेव प्रदापयेत् ॥ [K 415]

[1]क्रियासमूहकर्तृत्वे सम्भूयैकक्रियाकरणे ।

---

641 ॰वेक्ष्यते : LCM2 पेक्षते । 643 प्रमदानां : LCM2 प्रमत्तानां ।643 ॰क्रियाविदां : B2 विदां तथा । 644 निन्द्येष्वेव : B1 नित्यमेव ।646 ॰युक्तेषु : B2 योगेषु LCM2 युक्तानां । 646 तु : B2 च । 649[1] कात्यायनः : B1B2 om ।

[1]पितामहः -

651 विश्रम्भे सर्वशङ्कासु संधिकार्ये तथैव च ।
एष कोशः प्रदातव्यो नित्यं चित्तविशुद्धये ॥ [Pi 37]

[1]अत्र द्रव्यसंख्यातो दिव्यविशेषः ।

[2]तत्र विष्णुः -

652-654 अथ समयक्रिया । राजद्रोहसाहसेषु यथाकामं । निक्षेपर्णस्तेयेष्वर्थप्रमाणात् ॥ [Vi 9.1-3]

[1]समयो दिव्यं । [2]राजद्रोहादिषु यथाकामं राजेच्छानुसारेण दिव्यमित्यर्थः ।

[3]दैवी क्रियेत्यनुवृत्तौ बृहस्पतिः -

655 ऋणादिषु च कार्येषु विसंवादे परस्परं ।
द्रव्यसंख्यान्विता देया पुरुषापेक्षया तथा ॥ [B 8.7]

[1]कात्यायनः -

656 दत्तस्यापह्नवो यत्र प्रमाणं तत्र कल्पयेत् ।
स्तेयसाहसयोर्दिव्यं स्वल्पे ऽप्यर्थे प्रदापयेत् ॥ [K 416]

[1]कल्पयेत् अपह्नुतद्रव्यसंख्यां जानीयात् । [2] स्वल्पे ऽपीति - यादृशि स्वल्पे ऋणादौ दिव्याभावः स्तेयसाहसयोस्तादृश्यपि घने दिव्यमित्यर्थः ।

[3]बृहस्पतिः -

657 संख्या रश्मिरजोमूला मनुना समुदाहृता ।
कार्षापणान्ता सा दिव्ये नियोज्या विनये तथा ॥ [B 8.28]

658 विषं सहस्रे ऽपहृते पादोने च हुताशनः ।
त्रिभागोने च सलिलमर्धे देयो घटः सदा ॥ [B 8.29]

659 चतुःशताभियोगे तु दातव्यस्तप्तमाषकः ।
त्रिशते तण्डुला देयाः कोशश्चैव तदर्धके । [B 8.30]

660 शते हृते ऽपह्नुते च दातव्यं धर्मशोधनं ।

---

651 विश्रम्भे : CM2 विस्रम्भे । 654[2] ०सारेण दिव्यमित्यर्थः : LCM2 सारेणेत्यर्थः । 656[1] कल्पयेत् : B2 कल्पयेद् ।

गोचोरस्य प्रदातव्यं सम्यैः फालावलेहनं ॥ [B 8.31]

661 एषा संख्या निकृष्टानां मध्यानां द्विगुणा स्मृता ।
चतुर्गुणोत्तमानां च कल्पनीया परीक्षकैः ॥ [B 8.48]

[1] रश्मिरजोमूला -

662 जालान्तरगते भानौ यत् सूक्ष्मं दृश्यते रजः ।
प्रथमं तत्प्रमाणानां त्रसरेणुं प्रचक्षते [M 8.132]

[1] इत्यादिका ।[2] अग्रिमसंख्याप्येतदनुसारेण। [3] विनये दण्डे । [4] निकृष्टानां जातिगुणकर्मभिः । [5] एवं मध्यमानामुत्तमानां च ।

[6] याज्ञवल्क्यः -

663 ना सहस्रात् हरेत् फालं न विषं न तुलां तथा ।
नृपार्थेष्वभिशापे च वहेयुः शुचयः सदा ॥ [Y 2.99]

[1] ना सहस्रात् पणसहस्रादर्वागित्यर्थः । [2] नृपार्थेषु नृपद्रोहेषु नृपद्रव्येषु वा । [3] अभिशापे पातकाभियोगे । [4] सदा पूर्वोक्तसंख्यां विनापीत्यर्थः । [5] शुचयः स्नानादिना ।

[6] एतानि तु सहस्रादिवचनानि स्तेयसाहसविषयाणीत्याहुः ।

[7] विष्णुः -

664.665 सर्वेष्वेवार्थजातेषु मूल्यं कनकं प्रकल्पयेत् । तत्र कृष्णलोने शूद्रं दूर्वा-
666.667 करं शापयेत् । द्विकृष्णलोने तिलकरं । त्रिकृष्णलोने रजतकरं ।
668-670 चतुःकृष्णलोने कनककरं । पंचकृष्णलोने सीतोद्धृतमहीकरं । सुव-
671 र्णार्धे कोशः देयः शूद्रस्य । ततः परं यथार्हं घटाग्न्युदकविषा-
672.673 णामन्यतमं । द्विगुणार्थे यथाविहिता समयक्रिया वैश्यस्य । त्रि-
674.675 गुणार्थे राजन्यस्य । चतुर्गुणार्थे ब्राह्मणस्य । न ब्राह्मणस्य
676.677 कोशं दद्यात् । अन्यत्रागामिकालसमयनिबन्धनक्रियातः । कोशस्थाने
678 च ब्राह्मणं सीतोद्धृतमहीकरमेव शापयेत् । प्राग्दृष्टदोषं स्वल्पे
679 ऽप्यर्थे दिव्यानामन्यतममेव कारयेत् । सत्सु विदितं तच्चरित्रं न

---

663 वहेयुः : B1B2 हरेयुः । 663[1] पण° : LCM2 om । 663[1] °दर्वाग् : B2M1 दर्वाक् । 663[6] तु : LCM2 च ।670 सुवर्णा° : B1 स्वर्णा । 672 द्विगुणार्थे :B1 द्विगुणार्थेषु । 673 त्रिगुणार्थे : B1LCM2 त्रिगुणेऽर्थे । 674 चतुर्गुणार्थे : B1LCM2 चतुर्गुणेऽर्थे । 677 च : LCM2 om । 679 तच्चरित्रं : B2 सच्चरित्रं ।

महत्यर्थे ॥ [Vi 9.4-19]

[1] अत्र कनकपदं परिमाणरूपसुवर्णपरं । [2] तत्र सुवर्णे । [3] दूर्वादि यथाक्रमं करे निधाय शपथाः शूद्रेण कर्तव्याः । [4] सुवर्णार्धो ऽर्धः कनक इत्यर्थः । [5]अर्धसुवर्णमूल्यके धने शूद्रेण कोशपानं कर्तव्यं । [6]एतद्द्विगुणे वैश्येन । [7] एतत्त्रिगुणे क्षत्रियेण । [8]एतच्चतुर्गुणे ब्राह्मणेन त एव शपथाः कार्याः । [9]शूद्रकोशार्हधनाद् द्विगुणत्रिगुणयोर्वैश्यक्षत्रियाभ्यां कोश एव कार्यो ब्राह्मणस्य तु कोशो न देयः । [10] अन्यत्रागामीति अस्माभिर्मिलित्वा एवं कर्तव्यमिति यत्र समयः कृतः तस्मादन्यत्र । [11] तत्र तु ब्राह्मणस्यापि कोशो देयः । [12] सीता हलपद्धतिः । [13] यथार्हमिति स्तेयसाहसयोः स्वल्पे ऽप्यर्थे ऋणादौ तु शतसुवर्णाधिभियोगे ।

[14] <u>कात्यायनः</u> -

680 सर्वद्रव्यप्रमाणं तु ज्ञात्वा हेम प्रकल्पयेत् ।
हेमप्रमाणयुक्तं तु तदा दिव्यं प्रयोजयेत् ॥ [K 417]

681 शते विषं तु पादोने हुतभुक् तत्र दृश्यते ।
आपस्त्रिभागहीने तु शतार्धे तु तुला स्मृता ॥ [K App 42]

682 कोशपानं तदर्धे वा दशपंचकसप्तसु । [K ?]

683 तदर्धे तण्डुला देयास्तदर्धे तप्तमाषकः ॥ [K App 42°]

[1] शते सुवर्णस्येत्यर्थः । [2]पादोने पंचसप्ततिसुवर्णमिते धने । [3] त्रिभागहीने तृतीयभागहीने सुवर्णशते । [4] तदर्धे शतार्धार्धे । [5]दशपंचकसप्तस्विति - शतस्य दशमांशे पंचमांशे सप्तमांशे वा कोशपानं प्रदातव्यमित्यर्थः । [6] अत्र चाल्पपरिमाणमपकृष्टविषयं ।

[7]<u>वृद्धमनुः</u> -

684 ज्ञात्वा संख्यां सुवर्णस्य शतनाशे विषं स्मृतं ।
अशीतेस्तु विनाशे तु दद्याच्चैव हुताशनं ॥ [K 418]

685 षष्ट्या नाशे जलं ज्ञेयं स्याच्चत्वारिंशतो घटः ।
त्रिंशद्दशविनाशे वा कोशपानं बृहस्पतिः ॥ [K 419]

686 पंचाधिकस्य नाशे वा तदर्धस्य च तण्डुलाः ॥ [K 420ab]

---

679[1] °रूप° : B1 om । 679[9] कार्यो : LCM2 कार्यः । 679[11] तु : LCM2 om । 683 देयास् : LCM2 देयाः । 685 ज्ञेयं : LCM2 देयं । 686 पंचाधिकस्य : B2 पंचार्धकस्य ।

[1]त्रिंशद्दशविनाशे वेति - त्रिंशद्विनाशे दशविनाशे वेत्यर्थः । [2]पंचार्धकस्य वेति - पंचार्धस्य वा तदर्धस्य वा नाशे कोशपानमित्यर्थः ।

[3]इमानि तु वचनानि ऋणादिविषयाण्युत्कृष्टविषयाणि चेत्यतो न याज्ञवल्क्यादिविरोध इति ।

[4]दिव्यविषयस्तु ग्रन्थगौरवभयान्नेह तन्यन्ते ।

---

686[1] वेति : LCM2 वा इति । 686[1] वेत्यर्थः : B2 वा इत्यर्थः । 686[2] पंचार्धकस्य : B2 पंचार्धैकस्य। 686[2] पंचार्धस्य : B2 पंचार्धस्य एकस्य वा LCM2 पंचार्धकस्य । 686[3] ०विषयाण्युत्कृष्ट० : B2 विषयाणि उत्कृष्ट ।

(686) [5]अथ शपथाः ।

[6]तत्र मनुः -

687 सत्येन शापयेद्विप्रं क्षत्रियं वाहनायुधैः ।
गोबीजकांचनैर्वैश्यं शूद्रं सर्वैस्तु पातकैः ॥ [M 8.113]

688 पुत्रदारस्य चाप्येनं शिरांसि स्पर्शयेत् पृथक् ॥ [M 8.114cd]

[1]सत्येन शापयेत् यदि एतन्मया कृतं तदा सत्यातिक्रमजन्यपापभागहं स्यामिति वादयेत् । [2]वाहनायुधैरित्यत्रापि यद्येतन्मया कृतं तदैतानि वाहनान्यायुधानि वा मम निष्फलानि भवन्त्विति वादयेदित्यर्थः । [3]एवमन्यत्रापि । [4]हलायुधस्तु - [5]ब्राह्मणेन तु सत्यमिति वक्तव्यं क्षत्रियेण तु वाहनमायुधं वा स्प्रष्टव्यं वैश्येन तु गोबीजकांचनानामन्यतमं स्प्रष्टव्यं शूद्रेण तु सर्वमेतत् कर्तव्यं । [6]पातकशब्दश्चात्र पूर्वोक्तशपथानामेव विशेषणं ,[7] तेषां वृथा कृतानां पातकहेतुत्वादिति व्याख्यातवान् ।

[8]बृहस्पतिः -

689 सत्यं वाहनमस्त्रं च गोबीजकांचनानि च ।
देवब्राह्मणपादाश्च पुत्रदारशिरांसि च ॥ [B 8.33]

690 एते च शपथाः प्रोक्ता मनुना स्वल्पकारणे ।
साहसे ऽप्यभिशापे च दिव्यानि तु विशोधनं ॥[B 8.34]

[1]अत्र शपथानां दिव्यभिन्नतयोपन्यासाद्घटादिषु चापरिगणनान्न दिव्यत्वमतो न दिव्यधर्माणामुपवासार्द्रवासस्त्वादीनामन्वयः किंतु शौचार्थं स्नानाचमनादिमात्रस्येति द्रष्टव्यं ।

[2]शङ्खः -

691 इष्टापूर्तप्रदानमन्यांश्च शपथान् कारयेत् ॥ [SL 265]

[1]मनुः -

692 न वृथा शपथं कुर्यात् स्वल्पे ऽप्यर्थे नरो बुधः ।

---

686[6] तत्र मनुः : B1 om । 688[1] शापयेत् : B2 शापयेदिति । 688[2] तदैतानि : B2 तदा एतानि। 688[2] वा : B2LCM2 om । 688[2] वादयेदित्यर्थः : B2 वादयेत् । 690 च : M1 तु । 690 तु विशोधनं : B1 परिशोधनं ।

वृथा हि शपथान् कुर्वन् प्रेत्य चेह च नश्यति ॥[M 8.111]

693 कामिनीषु विवाहेषु गवां भुक्ते तथेन्धने ।
ब्राह्मणाभ्युपपत्तौ च शपथेनास्ति पातकं ॥ [M 8.112]

[1]कामिनीष्विति - रहसि कामिनीसंतोषार्थं वृथाशपथैरेवं विवाहसिद्ध्यर्थं वृथाशपथैरेवं गोघासार्थं वृथाशपथैरेवमावश्यकाहुतिहेत्विन्धनार्थं वृथाशपथैरेवं ब्राह्मणादिरक्षार्थं वृथाशपथैर्नदोष इत्यर्थः ।

[2]यमः -

694 मृषा कृत्वा तु शपथं कीटस्य वधसंयुतं ।
अनृतेन च युज्यते वधेन च तथा नरः ।[Ya ?]

695 तस्मान्न मिथ्या शपथं नरः कुर्याद्यथेप्सितं ॥ [Ya ?]

[1]कीटपदं प्राणिमात्रोपलक्षणं । [2] तेन यद्येतन्मया कृतं तदा मम ब्राह्मणवध इत्यादौ शपथे मृषा कृते कर्तुर्ब्रह्मवधभागिता भवतीत्यर्थः ।

[3] इति महाराजाधिराजश्रीदर्पनारायणात्मज-
महाराजाधिराजश्रीहृदयनारायणानुज-
महाराजाधिराजश्रीहरिनारायण-
विरचिते व्यवहारचिन्तामणौ
क्रियापादः ।

- - - - - - - - - -

692 शपथान् : B1 शपथं । 693[1] °रक्षार्थं : M1 रक्षणार्थं । 695[1] °लक्षणं : B2LCM2 लक्षणपरं । 695[3] इति महाराजा° ... °महाराजाधिराजश्रीहरिनारायण° : B2 इति श्रीहरिनारायण । 695[3] °विरचिते : M1 विरचित ।

(695) [4]अथ निर्णयः ।

[5]तत्र व्यासः -

696 प्रमाणैर्हेतुचरितैः शपथेन नृपाज्ञया ।
वादिसम्प्रतिपत्त्या वा निर्णयोऽष्टविधः स्मृतः ॥ [Vy 1.1]

697 लिखितं साक्षिणो भुक्तिः प्रमाणं त्रिविधं स्मृतं ।
अनुमानं विदुर्हेतुं तर्कश्चेति मनीषिणः ॥ [Vy 1.2]

698 देशस्थितिः पूर्वकृता चरितं समुदाहृतं ।
अर्थानुरूपाः शपथाः स्मृताः सत्यघटादयः ।
तेषामभावे राजाज्ञानिर्णयं तु विदुर्बुधाः ॥ [Vy 1.3]

[1]प्रमाणैरित्यनेन लिखितसाक्षिभुक्तीनां प्रत्येकं विवक्षा । [2]तर्कानुमाने हेतुरित्येकैव विधा । [3]सत्यघटादय इति दैवक्रियामात्रोपलक्षणमतोऽष्टविधत्वं इदं । [4]शपथपदं गौणं प्राचीनविभागानुरोधादित्यवधेयं ।

[5]अत्र शपथेषु कोशे च निर्णयक्रमः ।

[6]तत्र कात्यायनः -

699 आ चतुर्दशकादह्नो यस्य नो राजदैवकं ।
व्यसनं जायते घोरं स ज्ञेयः शपथे शुचिः ॥ [K 463]

[1]व्यसनमापत् । [2]घोरं अतिपीडाकरं ।

[3]कोशाधिकारे विष्णुः -

700 यस्य पश्येद् द्विसप्ताहात् त्रिसप्ताहादथापि वा ।
रोगोऽग्निर्ज्ञातिमरणं राजातङ्कमथापि वा ॥ [Vi 14.4]

701 तमशुद्धं विजानीयात् तथा शुद्धं विपर्यये ॥ [Vi 14.5ab]

[1]पितामहः -

702 त्रिरात्रात् सप्तरात्राद्वा द्विसप्ताहादथापि वा ।
वैकृतं यस्य दृश्येत पापकृत्स तु मानवः ॥ [Pi 161]

703 तस्यैकस्य न सर्वस्य जनस्य यदि तद् भवेत् ।

---

696 वा : B2 च । 698[1] °त्यनेन : B1 त्यत्र । 698[2] °त्येकैव : B2M1 त्येक । 698[5] अत्र : B1B2 अथ ।

रोगोऽग्निर्ज्ञातिमरणं सैव तस्य विभावना ॥[Pi 162]

[1] कात्यायनः -

704 अथ दैवविसंवादस्त्रिसप्ताहात्तु दापयेत् ।
अभियुक्तं प्रयत्नेन तदर्थं दण्डमेव च ॥[K 456]

705 तस्यैकस्य न सर्वस्य जनस्य यदि तद् भवेत् ।
रोगोऽग्निर्ज्ञातिमरणमृणं दद्याद्दमं च सः ॥[K 457]

706 ज्वरातीसारविस्फोटगूढास्थिपरिपीडनं ।
नेत्ररुग्गलरोगश्च तथोन्मादः प्रजायते ।
शिरोरुग्भुजभङ्गश्च दैविका व्याधयो नृणां ॥[K 458]

[1] दैवविसंवादो रोगज्ञातिमरणादि । [2] तस्यैकस्येति - न तु देशव्यापको मरकादिः किंतु शपथानन्तरजन्मा अभियुक्तस्यासाधारणो रोगादिर्भङ्गलिङ्गमित्यर्थः ।

[3] शपथाधिकारे नारदः -

707 ऊर्ध्वं यस्य द्विसप्ताहात् वैकृतं सुमहद् भवेत् ।
नाभियोज्यः स विदुषा कृतकालव्यतिक्रमात् ॥[N 1.331]

[1] अत्र त्रिरात्रादिव्यवस्था यथाक्रमं ब्राह्मणादिपरेति हलायुधः । [2] यस्य देवस्य स्नपनोदकं पीतं तत्प्रचण्डतातारतम्येन त्रिरात्रादिव्यवस्थेति पारिजातः । [3] देशकालप्राशस्त्योत्कर्षे विषयोद्भटत्वे च त्रिरात्रं । [4] यथा यथा तदपकर्षस्तथा तथा सप्तरात्रादिकल्प इति प्रदीपः ।

[5] सर्वमिदं सप्तत्रिरात्रादिवर्जं शपथसाधारणमाकाङ्क्षातौल्यात् ।

[6] अभियुक्तस्य तु जयेऽभियोक्तुरेव दण्ड इत्याह कात्यायनः -

708 अवष्टम्भाभियुक्तस्य विशुद्धस्य तु कोशतः ।
सदण्डमभियोगं तु दापयेदभियोजकं ।
दिव्येन शुद्धं पुरुषं सत्कुर्याद्धार्मिको नृपः ॥ [K 454]

---

705 दद्याद् : B2 दाप्यो । 706 ज्वरातीसार° : B2M1 ज्वरातिसार। 706[2] °व्यापको : M1 व्यापक । 706[2] मरकादिः : LCM2 मरणादिः । 707 °प्ताहात् : B1B2 °प्ताहाद् । 707[2] °व्यवस्थेति : LCM2 व्यवस्था इति । 707[3] °द्भटत्वे : B1 त्कटत्वे । 707[4] °पकर्षस् : B1 पकर्षः । 707[5] सप्तत्रि° : M1 त्रिसप्त ।

[1]अत्र कोशपदं दिव्यपदं चोपलक्षणं - [2]उत्तीर्णतामात्रे तात्पर्यं [3]न्याय-तौल्यादिति ।

[4]जयिभङ्गिनोर्दण्डमाह कात्यायनः -

709 शतार्धं दापयेच्छुद्धमशुद्धो दण्डभाग्भवेत् ॥ [K 459]

[1] शतार्धं पणानां ।

[2] भङ्गिदण्डं विवेचयति स एव -

710 विषे तोये हुताशे च तुलाकोशे च तण्डुले ।
तप्तमाषकदिव्ये च क्रमाद्दण्डं प्रकल्पयेत् ॥ [K 460]

711 सहस्रं षट्शतं चैव तथा पंचशतानि च ।
चतुस्त्रिद्व्येकमेवं च हीनं हीने च कल्पयेत् ॥ [K 461]

[1] हीने भङ्गिनि । [2] सहस्रादिकं पणानां ।

[3] अथ निर्णयबलाबलं ।

[4] तत्र नारदः -

712 धर्मश्च व्यवहारश्च चरित्रं राजशासनं ।
चतुष्पाद् व्यवहारोऽयमुत्तरः पूर्वबाधकः ॥ [NMā 1.10]

[1] उत्तरः पूर्वबाधक इति - धर्मव्यवहारचरित्रराजशासनेषु उत्तर उत्तरः पूर्वस्य पूर्वस्य बाधक इत्यर्थः ।

[2] बृहस्पतिः -

713 सम्यग्विचार्य कार्यं च युक्त्या सम्परिकल्पितं ।
परीक्षितं च शपथैः ज्ञेयो धर्मविनिर्णयः ॥ [B 9.3]

714 प्रतिवादी प्रपद्येत यत्र धर्मः स निर्णयः ।
दिव्यैर्वा शोधितः सम्यक् द्वितीयः स उदाहृतः ॥ [B 9.4abc5d]

[1] अयं द्विविधो धर्माख्यो निर्णयः ।

[2] तथा -

---

710 हुताशे च : B2 हुताशे तु । 712 चरित्रं : B2 चरितं । 712[1] °चरित्र° : B2 चरित । 713 शपथैः : B2 शपथैर् । 714 सम्यक् : B1B2 सम्यग् । 714[2] तथा : B1B2 om ।

715 शास्त्रं केवलमाश्रित्य क्रियते यत्र निर्णयः ।
व्यवहारः स विज्ञेयो धर्मस्तेनावहीयते ॥ [B 1.19]

[1]धर्मो धर्माख्यो निर्णयः तेन व्यवहाराख्येन निर्णयेनावहीयते बाध्यत इत्यर्थः ।

[2]बाधविषयमाह कात्यायनः -

716 युक्तियुक्तं तु कार्यस्य दिव्यं यत्र तु वर्जितं ।
धर्मस्तु व्यवहारेण बाध्यते तत्र नान्यथा ॥ [K 39]

[1]अयोग्यदिव्याधीनो निर्णयो व्यवहारेण बाध्यत इत्यर्थः ।

[2]बृहस्पतिः -

717 देशस्थित्यनुमानेन नैगमानुमतेन च ।
क्रियते निर्णयस्तत्र व्यवहारस्तु बाध्यते ॥ [B 1.20]

[1]नैगमाः पौरवणिजः । [2] नैगमानुमतेनानुमानेनेति सम्बन्धः । [3] अनेन चरित्राख्येन निर्णयेन सामान्यमुखशास्त्रानुसारी व्यवहाराख्यो निर्णयो बाध्यत इत्यर्थः ।

[4]कात्यायनः -

718 विरुद्धं न्यायतो यस्तु चरित्रं कल्प्यते नृपैः ।
एवं तत्र निरस्येत चरित्रं तु नृपाज्ञया ॥ [K 42]

719 अनेन विधिना प्रोक्तं बाधकं च यदुत्तरं ।
अन्यथाबाधनं यत्र तत्र धर्मो विहन्यते ॥ [K 43]

[1] विरुद्धं न्यायत इति - न्यायतो विरुद्धं यच्चरित्रं तद्राजाज्ञया निरस्यमित्यर्थः । [2] यद्वा न्यायत इति सार्वविभक्तिकस्तसिः । [3] न्याययोः शास्त्रयोर्वा यत्र विरोधस्तत्रापि राजाज्ञया व्यवहार इत्यर्थः ।

[4] अथ निर्णीतिकृत्यं ।

[5] तत्र नारदः -

720 स्वयमभ्युपपन्नोऽपि स्वचर्यावसितोऽपि सन् ।

---

715[1] निर्णयः : B2 निर्णयम् । 717[3] चरित्रा° : B2 चरिता । 718 चरित्रं : B1 चरितं । 718 चरित्रं : B1 चरितं । 719[1] तद्राजाज्ञया : B1 नृपाज्ञया ।

क्रियावसन्नो ऽप्यर्हेत परं सभ्यावधारणं ॥[NMā 2.41]

721 स तैरवधृत: पश्चाद्राज्ञा शास्य: स शास्त्रत: ॥ [NMā 2.43ab]

[1] स्वयमभ्युपपन्न: आत्मनैवाङ्गीकृतस्वपराजय: । [2] स्वचर्यावसित: कम्पस्वेदवैवर्ण्यादिना भङ्गितयावधारित: । [3] क्रियावसन्न: दिव्यादिना क्रियया प्राप्तावसाद: प्राप्तपराजय इति यावत् [4] परमनन्तरं सभ्यावधारणमर्हेत सभ्यानां मिलित्वा पराजितो ऽयमिति कीर्तितमर्हेदित्यर्थ: ।

[5] याज्ञवल्क्य: -

722 निह्नवे भावितो दद्यात् धनं राज्ञे च तत्समं ।
मिथ्याभियोगी द्विगुणमभियोगाद्धनं हरेत् ॥ [Y 2.11]

[1] निह्नवे ऽपलापे । [2] भावित: साक्ष्यादिभिरङ्गीकारित: ।

[3] मनु: -

723 अर्थे ऽपव्ययमानं तु कारणेन विभावितं ।
दापयेद्धनिकस्यार्थं दण्डलेशं च शक्तित: ॥ [M 8.51]

724 यो यावन्निह्नवीतार्थं मिथ्या यावति वा वदेत् ।
तौ नृपेणाप्यधर्मज्ञौ दण्ड्यौ तद्द्विगुणं दमं ॥[M 8.59]

[1]अपव्ययमानमपलपन्तं । [2] कारणेन साक्ष्यादिप्रमापणेन ।
[3]यावदिति - अधमर्णो यावन्तमर्थमपजानीते यावति धने मिथ्योत्तमर्णो ऽभियुंजीत तावुभावाशयदोषेण विवादप्रवृत्तौ विवादविषयधनद्विगुणं दण्डं दाप्यावित्यर्थ: । [4] आशयदोषव्यतिरेकेण विस्मरणादिनापह्नवे दण्डलेशं च शक्तित इत्यवगन्तव्यं ।

[5] अत्र च समद्विगुणदण्डलेशानामपह्नोतुर्जातिवयोवित्तसमाचारादिना व्यवस्था कार्या । [6] आशयदोषबलवदाशयदोषानादाय व्यवस्थेति केचित् ।
[7] तदाह याज्ञवल्क्य: -

725 ज्ञात्वापराधं देशं च कालं बलमथापि वा ।
वय: कर्म च वित्तं च दण्डं दण्ड्येषु दापयेत् ॥ [Y 1.368]

---

721 स तैरव° : M1 सभ्यैरव । 721 स शास्त्रत: : CM2 स्वशास्त्रत: ।722 दद्यात् : M1 दद्याद् । 722[1] ऽपलापे : B1 अपलापे B2 पह्नवे । 723 च : B2 तु । 724[3] °प्रवृत्तौ : B1 वृत्तौ । 725 वय: ... वित्तं च : B1 वयश्च ... वित्तं ।

[1] बृहस्पतिरपि -

726 अपराधानुरूपश्च दण्डोऽत्र परिकल्पित इति ॥[B 9.2cd]

[1] सम्प्रतिपत्त्युत्तरदातुस्तदतिरिक्तापह्नोतृविषयदण्डार्धदण्ड इत्याह व्यासः -

727 निह्नुते तु यदा वादी स्वयं तत्प्रतिपद्यते ।
ज्ञेया सा प्रतिपत्तिस्तु तस्यार्धं विनयः स्मृतः ॥[Vy 1.115]

[1] द्विजातिषु मिथ्याभियोजकशूद्रदण्डमाह नारदः -

728 मिथ्याभियोगिनो ये स्युर्द्विजानां शूद्रयोनयः ।
तेषां जिह्वां समुत्कृत्य राजा शूले निवेशयेत् ॥ [NMā 2.37]

729 निह्नुते लिखितानेकमेकदेशविभावितः ।
दाप्यः सर्वान्नृपेणार्थान्न ग्राह्यस्त्वनिवेदितः ॥[Y 2.20]

[1]यदानेकं सुवर्णरजतताम्रादिकमुत्तमणो लेखयेत् एतानि मे धारयसीत्युक्त्वाभियुक्तः सर्वं निह्नुते तदेकदेशेऽपि सुवर्णे रजते वा साक्ष्यादिना विभाविते सर्वमभियोगविषयमर्थमभियोक्त्रेऽभियोज्यो दाप्यः । [2] एकदेशविभावनानन्तरं त्वादिप्तोऽपि भाषाकालेऽनुपन्यस्तोऽर्थो नाभियुक्तपार्श्वे दाप्य इत्यस्यार्थ इति हलायुधः ।

[3] नारदः -

730 अनेकार्थाभियोगे तु सर्वार्थव्यपलापिना ।
विभावितैकदेशेन देयं तदपि युज्यते ॥ [N ?]

[1]इदं चोभयमपि येषामर्थानां मिथोऽविनाभावस्तत्परं, [2] न्यायमूलकत्वात् । [3]यद्वा एकदेशप्रमापिते सर्वमेव दास्यामीति सपणविवादविषयमिदं । [4]तदाह याज्ञवल्क्यः -

---

726 °रूपश्च : B1 रोघश्च B2 रूपेण । 726[1] °ह्नोतृ : B1 ह्नोतुः (m sh)। 726[1] °दण्डार्ध° :LCM2 दण्डार्द्धं । 727 तत् : LCM2 तु । 729 लिखिता° : B1LCM2 लिखितो । 729 ग्राह्यस्त्व° : B1 ग्राह्यो त्व । 729[1] °भियुक्तः :B1LCM2 भियुक्तः सन् । 729[1] °विषयमर्थ° : B2 विषयार्थ । 729[1] ऽभियोज्यो : B1 अभियोज्यो । 729[3] °नन्तरं त्वादिप्तो : B2 नन्तरं वादिप्तो : LCM2 नन्तरमादिप्तो ।

731 सपणश्चेद्विवादः स्यात्तत्र हीनं प्रदापयेत् ।
दण्डं च स्वपणं चैव धनिने धनमेव च ।। [Y 2.18]

[1] स्वपणं स्वयंकृतपणमित्यर्थः ।

[2] अथ जयिप्रतिपत्तिः ।

[3] तत्र बृहस्पतिः -

732 प्रतिज्ञाभावनाद्वादी प्राड्विवाकादिपूजनात् ।
जयपत्त्रस्य चादानाज्जयी लोके निगद्यते ।। [B 9.21]

[1] कात्यायनः -

733 सिद्धेनार्थेन संयोज्यो वादी सत्कारपूर्वकं ।
लेख्यं तदर्थसंयुक्तं तस्मै दद्याच्च पार्थिवः ।। [K 262]

[1] तथा -

734 निरस्तं लिखितं यत्तु तच्च सभ्यो विनाशयेत् ।
पश्चात्कारक्रिया वापि निरस्येत न संशयः ।। [K ?]

735 निरस्ता तु क्रिया यत्र प्रमाणनैव वादिना ।
पश्चात्कारो भवेत्तत्र न सर्वासु विधीयते ।। [K 264cdef]

736 दासस्त्रीभूगृहारामलेखकानां पराजये ।
एतेष्वेव सदा देयः पश्चात्कारस्तु पार्थिवैः ।। [K ?]

[1] पश्चात्कारो निर्णयानन्तरक्रिया जयपत्त्रादिका । [2] प्रमाणं साक्ष्यादि । [3] एतेष्वेवेत्युपलक्षणं, [4] अन्यत्रापि शिष्टैस्तद्दानात् ।

[5] अथ पुनर्न्यायः ।

[6] मनुः -

737 तीरितं चानुशिष्टं च यत्र क्वचन यद् भवेत् ।
कृतं तद्धर्मतो विद्यात् न तद् भूयो निवर्तयेत् ।। [M 9.233]

[1] तीरितमिति - तीर पार कर्मसमाप्तावित्यस्य चुरादिकस्य निष्ठायां रूपं । [2] तेन निर्णीय समापितमित्यर्थः । [3] अनुशिष्टं साद्यादिभिरुक्तं ।

---

731[3] तत्र : B2 om । 736[4] तद्दानात् : LCM2 तद्दानादिति संक्षेपः । 737 विद्यात् : B1B2 विद्यान् । 737 निवर्तयेत् : B1 निवर्तते । 737[1] चुरादि° : B1B2M1 चौरादि ।

[4] यत्र क्वचन ग्रामादिसमायां । [5] अयं तु लक्ष्मीधरादिस्वरसः ।
[6] ग्रन्थान्तरे तु - साक्ष्यादीनां दुष्टत्वे परं विचारितस्य तीरितत्वानुशिष्टत्वे न त्वन्यथेति । [7] तदाह कात्यायनः -

738 असत्सदिति यः पक्षः सभ्यैरेवावधार्यते ।
तीरितः सोऽनुशिष्टस्तु साक्षिदौष्ट्यात् प्रकीर्तितः ॥ [K 495]

[1] यत्र तु तीरितानुशिष्टयोरप्यधर्मकृतत्वं मत्वा पराजयी पुनः प्रत्यवतिष्ठते तत्र तस्य स्वीकारितविवादविषयद्विगुणदण्डस्य भूयोऽपि न्यायदर्शनं कार्यमेवेत्याह नारदः -

739 तीरितं चानुशिष्टं च यो मन्येत विधर्मतः ।
द्विगुणं दण्डमास्थाय तत्कार्यं पुनरुद्धरेत् ॥ [NMā 1.65]

[1] विधर्मकृतत्वं प्रकारकं ।

[2] स्वचेष्टावसिते पुनर्न्यायदर्शनाभावं चाह स एव -

740 साक्षिसभ्यावसन्नानां दूषणे दर्शनं पुनः ।[NMā 2.40]
स्वचर्यावसितानां च नास्ति पौनर्भवो विधिः ॥

[1] साक्षिसभ्यावसन्नानां साक्षिनिगदेन सभ्यावधारणेन च प्राप्तावसादानां पुनर्दर्शनं न्यायप्रदर्शनमित्यर्थः । [2] दूषणे साक्षिणां सभ्यानां च दूषणे सतीत्यर्थः ।[3] स्वचर्यावसितानां स्वव्यापारेण परस्परविरुद्धभाषणादिना स्वयमेवाङ्गीकृतपराजयत्वेन प्राप्तावसादानां ।[4] नास्ति पौनर्भवो विधिरिति - न पुनर्व्यवहारप्रवर्तनमित्यर्थः ।

[5] तत्रैव बृहस्पतिः -

741 पलायनानुत्तरत्वादन्यपक्षाश्रयेण च ।
हीनस्य गृह्यते वादो न स्ववाक्यजितस्य तु ॥[B 9.22]

[1] इदमत्राकूतं - [2] अदुष्टसाक्षिसभ्यादिभिः धर्मतो यद्विचारितं तद्वादीच्छामात्रेणान्यथाकृतं तत्र द्विगुणदण्डमास्थापापि न विचार्यं, [3] तीरितं चानुशिष्टं चेति मनुवाक्यविरोधादनवस्थापत्तेः ।
[4] यत्तु लोभप्रमादादिना दुष्टसाक्षिसभ्यैर्निर्णीतं तत्र दूषणे प्रमाणसिद्धे पुनर्विचारणीयमेव । [5] यदाह याज्ञवल्क्यः -

---

737[6] विचारितस्य : B1 विचारस्य । 740 [1] °प्रदर्शन° : B2 प्रवर्तन । 741[2] °मात्रेणान्यथाकृतं तत्र : B1M1 मात्रेण ।

742 दुर्दृष्टांस्तु पुनर्दृष्ट्वा व्यवहारान्नृपेण तु ।
सभ्याः सजयिनो दण्ड्या विवादाद् द्विगुणं दमं ॥[Y 2.305]

[1]नारदोऽपि -

743 असाक्षिकं तु यद्दृष्टं विमार्गेण च तीरितं ।
असम्मतमतैर्दृष्टं पुनर्दर्शनमर्हति ॥[NQ 1.14]

[1]तथा -

744 निश्चित्य बहुभिः सार्धं ब्राह्मणैः शास्त्रपारगैः ।
दण्डयेज्जयिना साकं पूर्वसभ्यांस्तु दोषिणः ॥[B 9.24]

[1]सभ्यानित्यनेन साक्षिणोऽप्युपलक्ष्याः ।

[2]याज्ञवल्क्योऽपि -

745 बलोपधिविनिर्वृत्तान् व्यवहारान्निवर्तयेदिति ॥[Y 2.31ab]

[1]ततश्च यन्निर्णीतमपि साक्षिसभ्यादिदुर्लक्ष्यदूषणमुद्भाव्य पराजितो वादी न स्वीकरोति किंतु पुनर्विचारमर्थयते तत्र द्विगुणदण्डमास्थाय दूषणमेवापाततो विचारणीयं । [2]सिद्धे च दूषणे द्विगुणं दण्डं तिरस्कृत्य पुनस्तत्त्वतो विवादपदविचार एव प्रवर्तनीयः ।

746 दुर्दृष्टांस्तु पुनर्दृष्ट्वा व्यवहारान्नृपेण त्विति [Y 2.305ab]

[1]लिखितयाज्ञवल्क्यस्वरसादेव दूषणासिद्धिपक्षे तु वादिनाङ्गीकृतं द्विगुणं दण्डं सभ्या दाप्याः । [2]अतिप्रसक्तिवारणस्य राज्ञा अवश्यकर्तव्यत्वात् । [3]यदाह नारदः -

747 दुर्दृष्टे व्यवहारे तु सभ्यास्तं दण्डमाप्नुयुः ।
न हि जातु विना दण्डं कश्चिन्मार्गेऽवतिष्ठते । इति ॥[NMā 1.66]

[1]तेन तत्कार्यं पुनरुद्धरेदित्यस्य पराजितसाक्षिसभ्यादिदूषणं तत्त्वतो विचार्य पुनर्व्यवहारं प्रवर्तयेदित्यर्थः । [2]युक्तं चेदं तीरितानुशिष्टयोश्च सभ्यसाक्षिकर्तृकयोर्विधर्मकृतत्वं तयोरेव दूषणपरं नान्यथा । [3]अतस्तत्त्वनिरूपणमेवोचितं ।

[4]याज्ञवल्क्यः -

---

745 °वर्तयेदिति : B1 वर्तयेत् । 745[1] यन्निर्णीत° : M1 निर्णीत । 745[2] द्विगुणं : M1 द्विगुण । 746 त्विति : M1 तु इति । 746[1] द्विगुणं : M1 द्विगुण ।

748 यो मन्येताजितो ऽस्मीति न्यायेनापि पराजितः ।
समायां तु पुनर्जित्वा दापयेद् द्विगुणं दमं ॥ [Y 2.306]

[1] तत्त्वतः पराजितो ऽपि तात्त्विकसाक्ष्यादिदोषमाशङ्क्य विचारस्यासम्यक्त्वं मन्वानस्तद्दोषं निरूप्यासत्त्वेनावधार्य विवादपदाद्धनाद् द्विगुणं दण्डं दाप्य इत्यर्थः ।

[2] अमात्यप्राड्विवाकयोस्तु दुष्टत्वे न द्विगुणो दण्डः । [3] किं तर्हि सहस्रमित्याह मनुः -

749 अमात्याः प्राड्विवाका वा ये कुर्युः कार्यमन्यथा ।
तत्स्वयं नृपतिः कुर्यात् तान् सहस्रं तु दापयेत् ॥ [M 9.234]

[1] सहस्रं पणानां -

750 पणानां द्विशतानीति [Vi 4.14a]

[1] विष्णुवचनात् ।

[2] तदयं संक्षेपः - [3] पूर्वविचारस्यासम्यक्त्वशङ्कायामेव पुनर्विचारः। [4] तत्रापि पराजितस्यादौ द्विगुणदण्डस्वीकारः । [5] ततो विचारप्रवृत्तौ स्वोक्तस्य साक्ष्यादिदूषणस्य तेन पूरणे साक्ष्यादिमात्रदण्डः विवादपदस्य पुनर्विचारणं च । [6] अपूरणे तु पराजितस्यैव दण्डो न तु विचारान्तरमपीति ।

[7] अथ कृतनिवृत्तिः ।

[8] तत्र मनुः -

751 यस्मिन् यस्मिन् विवादे तु कौटसाक्ष्यं कृतं भवेत् ।
तत्तत्कार्यं निवर्तेत कृतमप्यकृतं भवेत् ॥ [M 8.117]

752 योगाधमनविक्रीतं योगदानप्रतिग्रहं ।
यत्र वाप्युपधिं पश्येत् तत्कार्यं विनिवर्तयेत् ॥ [M 8.165]

[1] योगः छद्म । [2] तेन यद् बन्धकार्पणादि कृतं तद्राजा निवर्तयेदित्यर्थः । [3] उपधिं छलं । [4] अत्राधमनादिकमुपलक्षणं । [5] ततो ऽन्यदपि निवर्त्यं ।

---

748 न्यायेनापि : B2 न्यायेन तु । 748 दं : B1 तु । 748[1] °साक्ष्यादि°: M1 साक्षी । 748[2] द्विगुणो : B1B2 द्विगुण । 750[3] °विचारः : B2 विवादस् । 750[5] स्वोक्तस्य : B2 स्वोक्त । 752[3] उपधिं : M1 उपधिश् । 752[5] ततो ... निवर्त्यं : M1 om ।

[6]योगी विश्रम्भघाती तत्कृतं विक्रयादि निवर्तयेदित्यर्थ इति हलायुधः ।

[7]तथा -

753 बलाद्दत्तं बलाद् मुक्तं बलाद्यच्चापि लेखितं ।
सर्वान् बलकृतानर्थानकृतान्मनुरब्रवीत् ॥[M 8.168]

[1]नारदः -

754 स्त्रीषु रात्रौ बहिर्ग्रामादन्तर्वेश्मन्यरातिषु ।
व्यवहारः कृतोऽप्येष पुनः कर्तव्यतामियात् ॥ [NMā 1.43]

[1]तथा -

755 सत्या न भाषा भवति यद्यपि स्यात् प्रतिष्ठिता ।
बहिश्चेद् भाषते धर्मान्नियताद् व्यवहारिकात् ॥ [NMā 2.15]

[1]या नियतव्यवहारिकधर्मबाह्यविषया भाषोच्यते सा प्रतिष्ठितापि लेख्यादिप्रमाणवत्यपि सत्या न भवति । [2]तया योऽर्थः प्रतिपाद्यते असौ नानुष्ठेयो यथा पुत्रादिमन्तं कश्चिदभियुङ्क्ते अनेन सर्वस्वं मम दत्तमित्यादि ।

[3]मनुः -

756 मत्तोन्मत्ताध्यधीनैश्च बालेन स्थविरेण वा ।
असम्बद्धकृतश्चैव व्यवहारो न सिध्यति ॥ [M 8.163]

[1]अध्यधीनो दासः । [2]असम्बद्धोऽनधिकारी ।

[3]याज्ञवल्क्यः -

757 बलोपधिविनिर्वृत्तान् व्यवहारान्निवर्तयेत् ।
स्त्रीनक्तमन्तरागारबहिःशत्रुकृतांस्तथा ॥ [Y 2.31]

[1]बहिर्व्यवहारोचितप्रदेशात् ।

[2]नारदः -

758 यद् बालः कुरुते कार्यमस्वतन्त्रस्तथैव च ।
अकृतं तदपि प्राहुः शास्त्रे शास्त्रविदो जनाः ॥ [N 1.39]

---

752[6] विश्रम्भ॰ : B1 विस्रम्भ। 752[6] विक्रयादि : B2 विक्रयादिकं। 755[2] नानुष्ठेयो : B2 नानुष्ठेयः । 757 ॰नक्त॰ : B1 कृत । 757 ॰गार॰ : B1 गेह । 757[1] बहिर्व्यव॰ : B1 बहिः व्यव। 758 कार्यमस्व॰ : M1 कार्यं न स्व।

759 स्वतन्त्रो ऽपि हि यत्कार्यं कुर्यादप्रकृतिं गतः ।
तदप्यकृतमेवाहुरस्वतन्त्रः स हेतुभिः ॥ [N 1.40]

760 कामक्रोधाभिभूतार्ता भयव्यसनपीडिताः ।
रागद्वेषपरीताश्च ज्ञेयास्त्वप्रकृतिं गताः ॥ [N 1.41]

761 तथा दासकृतं कार्यमकृतं परिचक्षते ।
अन्यत्र स्वामिसंदेशात् न दासः प्रभुरात्मनः ॥ [N 1.29]

762 पुत्रेण च कृतं कार्यं यत्स्यादच्छन्दतः पितुः ।
तदप्यकृतमेवाहुर्दासः पुत्रश्च तौ समौ ॥ [N 1.30]

[1] अस्वतन्त्रग्रहणाल्लब्धे ऽपि बाले पुनर्बालग्रहणं पित्रोरभावे ऽपि बालस्यास्वातन्त्र्यप्रतिपादनार्थं । [2] एतच्च कुटुम्बभरणातिरिक्तपरं, [3] कुटुम्बार्थं ऽध्यधीनो ऽपीत्यग्रिमवाक्यात् ।

[4] प्रकृतिः स्वभावः । [5] अप्रकृतिं गतः अस्वभावस्थ इत्यर्थः ।

[6] अच्छन्दत इति पितुश्छन्दं इच्छां विनेत्यर्थः ।

[7] कात्यायनः -

763 न दोत्रगृहदासानां दानाधमनविक्रयाः ।
अस्वतन्त्रकृताः सिद्धं प्राप्नुयुर्नानुवर्णिताः ॥ [K 467]

[1] नानुवर्णिता अननुमताः । [2] स्वतन्त्रेणेति शेषः ।

[3] नारदः -

764 स्त्रीकृतान्यप्रमाणानि कार्याण्याहुरनापदि ।
विशेषतो गृहक्षेत्रदानाधमनविक्रयाः ॥ [N 1.26]

765 एतान्येव प्रमाणानि भर्ता यद्यनुमन्यन्ते ।
पुत्रः पत्युरभावे वा राजा वा पतिपुत्रयोः ॥ [N 1.27]

766 कुले ज्येष्ठस्तथा श्रेष्ठः प्रकृतिस्थश्च यो भवेत् ।
तत्कृतं स्यात्कृतं कार्यं नास्वतन्त्रकृतं कृतं ॥ [N 1.42]

[1] अनापदीत्यनेनापत्प्रतीकारार्थं स्त्रीकृतान्यपि प्रमाणान्येवेत्युक्तं । [2] प-

---

759 °स्वतन्त्रः स : B2 स्वातन्त्र्यस्य । 761 °संदेशात् : B2 संदेशान् । 762 °हुर्दासः : B2 हुः दासः । 762[1] °ग्रहणाल् : B2 ग्रहणात् । 762[2] °तिरिक्तपरं : B2 तिरिक्तं । 762[3] °पीत्य° : M1 पि इत्य । 763[1] नानुवर्णिता अननुमताः : B2 अनुवर्णिता अनुमताः । 766[1] °त्यनेनाप° : B2 त्यनेन आप ।

